वैशाखमासे विशाखानक्षत्रयुतपूर्णिमायां क्षीरसंयुक्तपनसाम्रादि-फलोपेतमहाहविर्निवेदनविषये प्रमाणं श्रीपाञ्चरात्रे विश्वामित्रसंहितायां षड्विंशेऽध्याये—वैशाखस्य सिते पक्षे विशाखापूर्णिमा यदि। इति। विचारं तु न कारयेत्। विशाखानक्षत्रहीनेऽपि सर्वपापप्रणाशनम्॥ चूतादिषु समस्तानां फलान्याहृत्य देशिकः। पाचयेद्गुणमिश्रं तु इति। नालिकेरफलोपेतं एलाकर्पूरमिश्रितम्। पाचयेत् क्षीरमिश्रं तु महाहविस्समन्वितम्॥ इत्यारभ्य, चूतादिफलसंयुक्तं यथाकामं प्रदापयेत्। इत्यादि॥

श्रीवैखानसीये—तस्यां तु शुद्धवैशाख्यां पौर्णमास्यां विशेषतः। रम्भापनसचूतानां फलान्याहृत्य शर्कराः॥ नारिकेलफलेक्षूणां खण्डं क्षीरविमिश्रकम्। महानसे तु संतप्य पात्रेष्वादाय सन्निधौ। प्रक्षिप्य देवदेवाय उत्सवान्ते निवेदयेत्॥ इति।

वासिष्ठसंहितायाम्—एवमभ्यर्चयन्विप्रः स याति परमां गतिम्॥ इति।

परमपुरुषसंहितायाम्—पूजान्ते स्थापकस्सम्यक् विज्ञाप्याथ जनार्दनम्। आचार्यायार्चको भूयः प्रदद्यात्तदनन्तरम्॥

भगवच्छास्त्रे—पादग्रहगतं तीर्थं ग्राह्यं दक्षिणहस्ततः। पिबेत्तेनैव चाङ्गानि प्लावयेद्वैष्णवश्शुचिः॥

हारीतस्मृतौ विशिष्टपरमधर्मशास्त्रे वृत्त्यधिकारनामकेऽष्टमेऽध्याये—चक्राङ्कितस्य विप्रस्य पादप्रक्षालितं जलम्। पीत्वा पातकसाहस्रैः मुच्यते नात्र संशयः॥ इति।

स्थलशुद्धिविषये स्मृतौ—भूमेर्विलेपनं कुर्यात् पश्चात्पात्रं निधाय च। अविलेपनभूमिश्चेत् भुक्त्वा चान्द्रायणं व्रजेत्॥ सर्वतीर्थमयी भूमिः सर्वरत्नसमन्विता। सर्वौषधिगुणोपेता किमर्थमुपलेपनम्॥

इन्द्रस्य वज्रेण हतो वृत्रासुरमहायशाः । मेदसा तस्य विच्छिन्नं तदर्थमुपलेपनम् ॥ चतुरश्रं ब्राह्मणस्य त्रिकोणं क्षत्रियस्य च । वैश्यस्य वर्तुलाकारं शूद्रस्याभ्युक्षणं स्मृतम् ॥ ब्रह्मा विष्णुश्च रुद्रश्च श्रीहुताशन एव च । मण्डलान्युपजीवन्ति तस्मात्कुर्वीत मण्डलम् ॥ यातुधानपिशाचाश्च क्रूराश्चैव तु राक्षसाः । हरन्ति रसमन्नस्य मण्डलेन विवर्जितम् । इति ।

वैद्यनाथदीक्षितीये आह्निककाण्डे – उपलिप्ते शुचौ देशे निश्छिद्रं चतुरश्रकम् । गोमयं मण्डलं कृत्वा भोक्तव्यमिति निश्चितम् ॥ पात्रावस्थानतो न्यूनं अधिकं वा न कारयेत् ॥ इति ।

भुक्तिपात्रविषये – सदण्डं कदलीपत्रं वामभागे प्रविन्यसेत् । दक्षिणेऽग्रं समादाय भुक्त्वा चान्द्रायणं व्रजेत् ॥ इति ।

परिवेषणविषये स्मृतौ – सूपं च पायसं चाज्यं दद्यात् भोक्तुश्च दक्षिणे । तैलपाकं तथा वामे शेषे त्वनियमः स्मृतः ॥ इति ।

वासुदेवसंहितायां – मद्यागानन्तरं देवि वैश्वदेवं विना रमे । अनुयागस्तदा कार्यः परमैकान्तिभिर्द्विजैः ॥ इति ।

स्मृतिरत्नाकरे — अर्थपञ्चकतत्त्वज्ञाः पञ्चसंस्कारसंयुताः । आकारत्रयसम्पन्ना महाभागवताः स्मृताः ॥ इति ।

भरद्वाजपरिशिष्टे – तच्चिह्नाङ्कितदेहत्वं, तदीयाराधने रतिः । तदन्यस्पर्शवैराग्य इन्द्रियार्थेष्वलोलता ॥ आचार्याधीनवृत्तित्वं आचार्यार्पितसदेहता । क्रोध लोभ मदालस्य मान मोह विहीनता ॥ सत्य शौच दया धैर्य क्षमा संतोष युक्तता । इत्येतैर्लक्षणैर्युक्ता वैष्णवा वीतकल्मषाः ॥ इति ।

वासिष्ठसंहितायां – अभ्यर्च्य रामं गन्धाद्यैः आञ्जनेयं प्रणम्य

च। बालकाण्डं समारभ्य प्रत्यहं शक्तितः पठेत्। प्रत्यहं विंशतिः सर्गाः पठनीया द्विजन्मनाम् ॥ इति।

तत्रैव — नामभिर्वैष्णवैर्दिव्यैः कालक्षेपं समाचरेत्। नाम-संकीर्तनं कुर्यात् अशक्तो वेदपाठने ॥ यावदस्तमपर्यन्तं तावद्रामायणं पठेत्। अस्त गते दिनकरे सन्ध्यां कुर्वीत पूर्ववत् ॥ इति।

तत्रैव — हृत्पुण्डरीके देवेशं निवेश्य प्रयतः सुधीः। तत्पाद-पद्मयोर्जीवं आबद्धयाथ सुखं स्वपेत् ॥ इति।

तत्रैव — एवं यः कुरुते नित्यं स तु वैष्णव उच्यते। अन्यथा प्रच्युतो याति नरकं वेददूषकः ॥ इति। कैङ्कर्यमिति निश्चित्य देवस्य परमेष्ठिनः। वेदस्मृत्युक्तमखिलं कृत्यं कुर्यादनन्यधीः ॥ इति।

हारीतस्मृतौ विशिष्टपरमधर्मशास्त्रे नानाविधोत्सवविधाननामके सप्तमेऽध्याये — हरेर्भोगतया कुर्यात् न साधनतया क्वचित्। साधनं भगवान् विष्णुः साध्याः स्युर्वैदिकाः क्रियाः ॥ शेषभूतस्य जीवस्य तद्दास्यैकफलाः क्रियाः। श्रुतिस्मृत्युदितं धर्मः तद्दास्यं परिकीर्तितम् ॥ नैसर्गिकतया कुर्यात् तद्दास्यैकविलक्षणः। शंखचक्रोर्ध्वपुण्ड्रादिचिह्नं तद्दास्यलक्षणम् ॥ भोगार्थं परमैकान्ती यजेत्तैरन्वितो हरिम्। वैदिकेनैव मार्गेण पूजयेत्परमेश्वरम् ॥ अन्यथा नरकं याति कल्पकोटि-शतत्रयम्। तस्मात् श्रुत्युक्तमार्गेण यजेद्विष्णुमतन्द्रितः ॥ अर्चायां अर्चयेत्पुष्पैः अग्नौ च जुहुयाद्धविः। ध्यायेत्तु मनसा वाचा जपेन्मन्त्राननुवैदिकान्। एवं विदित्वा सत्कर्म भोगार्थं परमात्मनः। कुर्वीत परमैकान्ती पत्नी पत्युरिव प्रिया ॥ इत्यादि।

इति श्रीसदनुष्ठानदर्पणे उपोद्घातो नाम प्रथमप्रतिफलनम् ॥

---

## ॥ द्वितीयप्रतिफलनम् ॥

प्रपन्नानां कौपीनधारणविषये प्रमाणं —

प्रपन्नैः व्यतिस्यूतकटिसूत्रद्वयसहितकौपीनं धार्यं वचनात् शिष्टाचाराच्च । तथाहि हारीतस्मृतौ—त्रिसूत्रं त्रिगुणीकृत्य पञ्च सप्त नवापि वा । अयुक्सूत्रैर्व्यतिस्यूतं धारयेत् कटिबन्धनम् ॥ इति । शेषसंहितायां पञ्चदशाध्याये—प्रादेशमात्रविस्तारमायामं तच्चतुर्गुणम् । कौपीनं धारयित्वाथ विशुद्धो धारयेत्सदा ॥ कटिसूत्रं प्रकुर्वीत राज्ञवं पञ्चसूत्रकम् । तत्सूत्रेण च कौपीनं गृहस्थाद्यस्तु धारयेत् ॥

सच्चरित्रपरित्राणे दिव्यलक्षणानि भरद्वाजेन प्रपन्नलक्षणाधिकारे—ब्राह्मणः क्षत्रियो वैश्य इत्यारभ्य चक्राङ्कनपुण्ड्राणि चोक्त्वा पवित्राण्यब्जबीजानि शङ्खचक्राङ्कभूषणम् । धारयेद्वैष्णवन्नाम वैष्णवाश्रयमेव वा ॥ अयुक्सूत्रैर्व्यतिस्यूतं धारयेत्कटिबन्धनम् । कौपीनं वस्त्रयुग्मं च यथार्हमितराणि च । इति । पद्मबीजमयी माला तुलसी दिव्यचूर्णकम् । पवित्रं चाथ कौपीनं व्यतिस्यूता च मेखला ॥ पञ्चायुधाब्जतार्क्ष्यादिलक्षणाभरणादिकम् । वेषश्चानुल्बणश्शौक्ल्यं दन्तस्रक्पुण्ड्रवाससाम् । विष्णोस्तत्संश्रयाणां च चेतनाचेतनात्मनाम् ॥ आख्यया व्यपदेशश्च लक्षणानि सतां विदुः ॥ इति ।

उक्तानि। पवित्रं भगवता पवित्रोत्सवे धारितं क्षौमकार्पासादि रूपा इति काश्यपस्मृतौ कौपीनस्य प्रमाणं हि वक्ष्यते बुध सत्तमाः । बाहुमात्रप्रमाणं हि दीर्घं कौपीनमुच्यते ॥ द्वादशांगुलविस्तारं शुभ्रं मलिनवर्जितम् । इति । तत्रैव-पञ्चकिष्कुप्रमाणं हि वस्त्रद्वयमुदाहृतम् ॥

पुरःकच्छं पुरो धार्यं पश्चात्कच्छं ततः परम् । पूर्वकच्छं हि दैवं स्यात् पश्चात्कच्छं तदासुरम् । तस्माद्धृत्वा पूर्वकच्छं पश्चात्कच्छं

ततो धरेत् ॥ इति । श्री पाञ्चरात्रे खगेश्वरसंहितायां श्रीविष्णुतिलके, ब्रह्मोपदेशे पुण्याहादिविधिनामक पञ्चमाध्याये – प्रसङ्गादत्र वक्ष्यामि वस्त्रादीनां विधिं क्रमात् । सव्यं कटिं समारभ्य प्रादक्षिण्येन वेष्टयेत् ॥ पुरतः स्याच्चतुःकच्छः पृष्ठतश्चैककच्छवान् । दैवे पैत्र्ये तथा ब्राह्मे पञ्चकच्छो भवेदिति ॥ सुधेयं दोषरहितमन्तर्वासमखण्डितम् । पार्श्वे कच्छद्वयं कुर्यादग्रे कच्छद्वयं तथा ॥ पृष्ठभागे कच्छमेकं कृत्वा पूजार्हको भवेत् ॥ अन्तर्वासस्य विप्राणां पञ्चकच्छं भवेत् सदा ॥ अन्तर्वासमिदं विप्र कौपीनोपरि धारयेत् । बहिर्वासं वामभुजे धारयेद्यज्ञसूत्रवत् ॥ इति । शेषसंहितायां पञ्चदशाध्याये इमे एव श्लोकाः तत्र कच्छ-शब्दस्थाने पुच्छशब्दः प्रयुक्तः । पराशरस्मृतौ –

कटिसूत्रं तु कौपीनं शुक्लवस्त्रद्वयं शुभम् । कुण्डले चाङ्गुली-यादि गृहस्थस्य विशिष्यते ॥ इति । शाण्डिल्यस्मृतौ द्वितीये अध्याये– अन्तराच्छाद्य कौपीनं वाससी परिधाय च । ध्यानमौन-परो नित्यं संयताचमनं चरेत् ॥ इति । हारीतस्मृतौ–धौतवस्त्रं सान्तरीयं सकौपीनं धरेत्सितम् । निबद्धशिखकच्छस्तु द्विराचम्य यथाविधि ॥ इति । पराशरधर्मे–कौपीनं कटिसूत्रं च उत्तरीयमिति त्रयम् । यज्ञोपवीतवद्धार्यं सर्वशास्त्रार्थवित्तमैः ॥ कौपीनहीनो न स्नायात्तीर्थेषु विमलेषु च । अन्तराच्छाद्य कौपीनं वाससी परिधाप-येदिति ॥ अत्रिस्मृतौ–कौपीनसहितं शुक्लमम्बरं बिभृयात्तथा । उत्तरीयं च विमलं पश्चादाचमनं चरेत् ॥ इति । पराशरव्याख्या-याम्–दशाहीनेन वस्त्रेण न स्यात् कौपीनकादृते । नान्यदीयेन नार्द्रेण न सूच्या ग्रथितेन च ॥ इति ।

वासिष्ठसंहितायां प्रथमाध्याये – कटिसूत्रं सकौपीनमन्तरीयं यथाक्रमम् । उत्तरीयं बहिर्वस्त्रं धृत्वेति । तत्रैव पञ्चमाध्याये–श्राद्धेऽहनि

तु संप्राप्ते प्रातः स्नात्वा विधानतः । धृत्वा वस्त्रद्वयं शुद्धं सकौपीनं ससूत्रकम् ॥ धृत्वोर्ध्वपुण्ड्रं विधिवत् सन्ध्यावन्दनमाचरेत् । इति । विष्वक्सेनसंहितायां — कौपीनहीनं यद्वस्त्रं तदशुद्धमुदाहृतम् । तस्माद्धार्यं हि च सदा नराणां कार्यसिद्धये ॥ तद्विना यत्कृतं कर्म तत्सर्वं विफलं भवेदिति ॥

पराशरसंहितायां प्रथमाध्याये—कौपीनं कटिसूत्रं च सधौतं चोत्तरीयकम् । शिखाच्छिद्रोर्ध्वपुण्ड्रं च आचार्यस्य च लक्षणम् । शिष्यस्य लक्षणं चैवमर्चकस्य च लक्षणम् ॥ पञ्चसंस्काररहितः शिखाकौपीनवर्जितः । नित्यकर्मादिरहितो ह्यनर्चक इति स्मृतः ॥ इति । तत्रैव तृतीयाध्याये— नदीतीरं समागम्य मौनेन द्वयमुच्चरन् । कौपीनं योक्त्रमुत्तर्यं सुश्वेतं धारयेत्ततः ॥ इति । संहितान्तरे—कौपीनहीनं पुरुषं न श्राद्धे भोजयेद्द्विजः । प्राङ्मुखोदङ्मुखो वापि वस्त्रं सन्धारयेत् द्विजः ॥ कटिसूत्र च कौपीनं उत्तरीयं क्रमेण तु । इति । कर्णे तु दक्षिणे कुर्यात् यज्ञसूत्रावकुण्ठनम् ॥ कटिसूत्रं तथा कुर्यात् नाभेरूर्ध्वं यथा तथा । कौपीनाच्छादनं कृत्वा प्रक्षाल्य च कराविति वैखानस श्रीनिवासदीक्षितीये । श्रीरहस्यत्रयसार व्याख्यानसारप्रकाशिकायां प्रभावव्यवस्थाधिकारे शेषसंहितायां—स्नात्वा विधिवदाचम्य शौचाचमनपूर्वकम् । कौपीनं कटिसूत्रं च वस्त्रयुग्मं च धारयेदिति ॥ कौपीनं कटिसूत्रं च शिखायां तुलसीदळम् । यावद्धारयते विप्रस्तावच्छुद्धो न संशयः ॥ इत्यादिकं श्रीवैष्णवेतरविषयम् । हारीतस्मृतौ— कटिसूत्रं च कौपीनं महती शुक्लवाससी । कुण्डले चाङ्गुलीयानि गृहस्थस्य विधीयते ॥ इति । पुलस्त्यसंहितायां — पञ्चभिस्सप्तभिर्वापि सूत्रैः कार्पासनिर्मितैः । विधातव्यमिति प्रोक्तं कटिसूत्रस्य लक्षणम् ॥ इति ।

भारद्वाजसंहितायां परिशिष्टे चतुर्थाध्याये—प्रपन्नलक्ष्मविरुद्धाधिकारे—युग्मैर्विवर्तितं रौद्रमयुग्मैर्ब्राह्ममुच्यते । उभयैस्तैर्व्यतिस्यूतमयुग्मैर्वैष्णवं गुणैः ॥ इति । अस्य व्याख्या—युग्मैरिति युग्मैस्समैर्गुणैर्विवर्त्तितं रज्जुपरिणामं प्रापितं रौद्रं रुद्रदेवताकं । अयुग्मैः विषमैर्गुणैर्विवर्तितं ब्राह्ममुच्यते । उभयैर्युग्मैः अयुग्मैश्च मिलित्वा—अयुग्मैः विषमैस्तैर्गुणैः व्यतिस्यूतं मेखलारूपेण व्यत्यासेन स्यूतं न तु विवर्तितं वैष्णवं विष्णुदेवताकं पञ्चभिर्गुणैर्व्यतिस्यूतं वैष्णवमित्यर्थः । उपवीतं सदा ब्राह्मं वैष्णवं कटिबन्धनम् । उभयं धारयेद्रौद्रं साधयन् कर्म तामसम् ॥ उपवीतमिति—उपवीतं ब्राह्मं भवेत् गुणत्रयरूपत्वादिति भावः । कटिबन्धनन्तु वैष्णवं युग्मायुग्ममयैः गुणैः पञ्चभिः व्यतिस्यूतत्वादिति भावः । उभयं ब्राह्मं उपवीतं वैष्णवम् व्यतिस्यूतकटिबन्धनं च धारयेत् । रौद्रं तर्हि केन धार्यमित्यत आह—तामसं कर्म साधयन् कुर्वन् रौद्रं युग्मविवर्त्तितं कटिबन्धनं धारयेदिति शेषः ॥ रौद्रस्य तामसकर्माङ्गत्वात् सात्विकं कर्माचरता न धार्यमिति भावः ॥ तामसं नग्नमेकं च राजसं वसनद्वयम् । कौपीनसहितं तत्तु सात्विकं मुनिभिः स्मृतम् ॥ तामसमिति—एकं वसनं नग्नं नग्नप्रायं तामसं सिद्धं । वसनद्वयं राजसं । कौपीनसहितं वसनद्वयं मुनिभिः सात्विकं स्मृतं । अतः कौपीनसहितं वसनद्वयं धार्यमिति भावः इति ॥

सात्विकैरेव वर्तेत सात्विकोक्तं समाचरेत् । तामसं राजसं चैव दूरतः परिवर्जयेत् ॥ इति । मात्स्यपुराणे—सात्विकाः मोक्षदाः प्रोक्ताः राजसाः स्वर्गदाश्शुभे । तथैव तामसा देवि निरयप्राप्तिहेतवः । सात्विकानेव गृह्णीयात् मोक्षार्थी नैव राजसान् ॥ स्वर्गदान् तामसान् देवि तथैव निरयप्रदान् । इत्यादिवचनैः श्रीवैष्णवानां कौपीनधारणस्यावश्यकत्वप्रतिपादनात् । ननु कण्ठभूषणादौ गृहस्थानां कौपीनधारणस्यानुक्तत्वेन श्रीवैष्णवानां तेषां कौपीनधारणं निषिद्ध-

मिति माशंकिष्टाः । तदनन्तरग्रन्थे स्मृतिरत्नाकरे एवं गृहस्थधर्मा उक्ताः इत्युक्तेः पूर्वं वचनप्रदर्शनपूर्वकं गृहस्थानां कौपीनधारणा-वश्यकत्वप्रतिपादनेन – तत्रैवानन्तरं–सांप्रतं स्नातकव्रतं प्रतन्यते इति, कौपीनधारणायाथ शुल्वं कृत्वोपवीतवत् । यतिश्च ब्रह्मचारी च दध्यातां त्रिः प्रदक्षिणम् । इति इत्यादीन्यत्र स्नातकव्रते द्रष्टव्यानी-त्यादिवाक्येन स्नातकस्य कौपीनधारणानावश्यकत्वस्य प्रतीयमानत्वेन च तदनुसारेण तत्पूर्वग्रन्थे कण्ठभूषणे स्नातकप्रकरणे – एवं च तदूर्ध्वं स्नातकस्यान्तर्वासःपरिधानमेव कर्तव्यम् । न कौपीनं, ब्रह्मचारिणः नान्तर्वासः अस्नातकत्वात्तस्य कौपीनमेव इत्युक्तेः ब्रह्मचारिवत् स्नातकस्य कौपीनधारणं न मुख्यमिति तदाशयः इत्यपि वक्तुं शक्यत्वात् । अन्यथा – स्मार्तमाध्वाचारस्थापना-पत्तेः यज्ञोपवीतधारणादौ त्र्यम्बकमन्त्रजपादेः एकादश्यादौ श्राद्ध-कर्तव्यत्वस्य सोमबुधवारादौ विद्धजयन्त्यनुष्ठानस्य च प्रतिपादनेन परिणये तुरीयदिवसे द्राविडवेदस्वामिकगाथा पारायणस्य आचार्य-पदं गतानां श्रीचूर्णपरिपालनादेः तदवभृथकैङ्कर्यपरिसमाप्तौ त्रयोदश-दिने द्राविडवेदाध्ययनादेः श्राद्धात्मकतदीयाराधने श्रीपादतीर्थग्रह-णादेश्च प्रतिपादनाभावेन च तद्ग्रन्थस्य संवलिताधिकारिविषयकत्व-स्यापि वक्तुं शक्यत्वेन तद्ग्रन्थस्य प्रपन्नमात्रविषयकत्वस्य वक्तु-मशक्यत्वात् । तदीयैरेव मुमुक्षुदर्पणव्याख्याने शङ्कासमाधानपूर्वकं श्रीवैष्णवानां कटिसूत्रकौपीनधारणस्य आवश्यकत्वप्रतिपादनाच्च – तथाहि–मुमुक्षुदर्पणव्याख्याने अथ वस्त्रधारणमाह – सान्तर्वस्त्रमिति

सान्तर्वस्त्रं च दध्याद्वसनमथ कटीसूत्रबद्धं न तत्स्यात्
नास्मिन्कच्छश्च धार्यो यदि धृतिरसुरा घ्नन्ति चैतस्य धर्मान् ।
कृष्णः प्राहेति तस्मादुपरि वसनतः केवलं धार्यमेतत्
कर्माङ्गत्वेन संवर्तकमुनिवचनादुत्तरीयं च तद्वत् ॥

अन्तर्वस्त्रेण सहितं सान्तर्वस्त्रं तथा वस्त्रं धारयेदित्यर्थः । अल्पीयसा एकेन वस्त्रेण गुह्यादिकमाच्छाद्य तदुपरि परिधानं धारयेदित्यर्थः । तच्च कटिसूत्रेण बद्धं न स्यात् । अस्मिन् कटिसूत्रे कच्छश्च न धार्यः । धारयेच्चेन अस्य धर्मानसुरादयो घ्नन्ति इति कृष्णः प्राह आश्वमेधिके इति शेषः । तस्माद्धेतोः कटिसूत्रं वसनादुपरि केवलं धार्यम् । कर्माङ्गत्वेन संवर्तकमुनिवचनात्, उत्तरीय च तद्वत् धार्यमित्यर्थः । अन्यथा कण्ठभूषणकर्तृभिः मित्रतातगुरुभिरेव तत्कृतश्रीवैष्णवानुष्ठानप्रतिपादकस्मृतिरत्नाकरग्रन्थे जाबालिः– स्नात्वा निरस्य वस्त्रन्तु जङ्घे शोध्ये मृदम्भसा । अपवित्रीकृते ते तु कौपीनास्राववारिणा । चन्द्रिकायां – नोत्तरीयमधः कुर्यान्नोपर्यधरस्यमम्बरम् । नान्तर्वासो विना जातु निवसेद्वसनं बुधः ॥ इति । शाण्डिल्यः– चतुर्निमज्य विधिवदाचम्यादाय वाससः । खण्डद्वयं शिरोङ्ग च प्रत्येकं परिमार्जयेत् ॥ अन्तराच्छाद्य कौपीनं वाससी परिधापयेत् । उत्तरीयं सदा दध्यात्तद्विना नाचरेत्क्रियाः इति वचनान्युपादाय गृहस्थानां सदा कौपीनधारणावश्यकत्वप्रतिपादनेन तदसाङ्गत्यापत्तेः । वाधूलस्मृतौ प्रथमाध्याये–अन्तराच्छाद्य कौपीनं वाससी परिधाय च । उत्तरीयं सदा दध्यात्तद्विना नाचरेत्क्रियाः ॥ इत्युक्तत्वेन तदसाङ्गत्यापत्तेः । अहोबिलमठीयाह्निकग्रन्थे– निवीतं ब्रह्मसूत्रं दक्षिणे कर्णे आवेष्टय–कौपीनं धृत्वा जङ्घे पादौ आकूर्परं करौ च मृज्जलाभ्यां प्रक्षाल्य वस्त्रं धृत्वा उपवीती इति तदाचार्यैरेव गृहस्थश्रीवैष्णवानां कौपीनधारणमावश्यकमित्युक्तत्वात् । गोपालदेशिकाह्निकग्रन्थे च– उपवीतं निवीतं कर्णे निधाय कौपीनं धृत्वा जङ्घे मृदा संशोध्य हस्तौ प्रक्षाल्य वस्त्रं धृत्वा उत्तरीयं च धृत्वा मन्त्रस्नानमपि कुर्यात् इति तथैवोक्तत्वात् । अत्र याज्ञवल्क्यः – स्नात्वैवं वाससी धौते अच्छिद्रे परिधापयेदिति । व्यासः –नोत्तरीयमधः कुर्यान्नोपर्यधरस्यमम्बरम् ।

नान्तर्वासो विना जातु निवसेद्वसनं बुधः ।। इति । आश्वमेधिके श्रीभगवान्–स्नात्वैवं धारयेच्छाटीं न कुर्यात्परिपाशिकाम् । तां कक्ष्यां धारयेन्नात्र कदाचिदपि मानवः ।। पाशीनिबद्धकक्ष्यो यः कुरुते कर्म वैदिकम् । तत्सर्वमसुरा घ्नन्ति यातुधानाश्च सर्वशः ।। तस्मात्सर्वप्रयत्नेन कक्ष्यां पाशे न धारयेत् ।। इति । तां शाटी परितः पाशबद्धां न कुर्यादित्यर्थः । अस्मिन्वचनत्रये–कटिसूत्रेण वस्त्रस्य परितो बन्धनं तत्र कच्छबन्धनं च निषिध्यते । संवर्तः कटिसूत्रं कर्माङ्गमाह–कटिसूत्रं विना कर्म श्रौतं स्मार्तं करोति यः । सर्वं तं निष्फलं विद्यात्सोऽपि नग्नः इति स्मृतः ।। इति । भरद्वाजश्च–कौपीनधारणायाथ शुल्वं कृत्वोपवीतवत् । यतिश्च ब्रह्मचारी च दध्यातां द्विः प्रदक्षिणः ।। नग्नत्वपरिहाराय गृहस्थवनिनौ तथा । तथैव धारयेयातां अवश्यं केवलं च ताविति ।। रत्नाकरे–उत्तरीयं सदा शुद्धं गृहीत्वा द्विरुपस्पृशेदिति । एवं सति यत्तु संवर्तस्यैव वचनम्–अकच्छः पुच्छकच्छो वा द्विकच्छः कटिवेष्टितः । कौपीनकधरश्चैव नग्नः पञ्चविधः स्मृतः ।। इति । अत्र द्वितीयं पादं अद्विकच्छः ससूत्रकः इति केचित्पठन्ति । तदिदमुदाहृतवचनं आश्वमेधिकवचनेन समानार्थं ।। ससूत्र इति पाठे च तद्वत् न कटिसूत्रनिन्दापरम् । तथात्वे तस्यैव संवर्तस्य पूर्वोत्तरवचनविरोधापत्तेः कटिसूत्राभावेऽपि नग्नत्वस्य तेनैवोक्तत्वात् । तथात्वे तु नैवं विरोधः । अकच्छः पुच्छकच्छश्च तिर्यक्कच्छोर्ध्वकच्छकः । कटिसूत्रे बद्धकच्छो नग्नः पञ्चविधः स्मृतः । इति रत्नाकरोदाहृतवचनेनैकार्थ्यं भवति । अतो न कटिसूत्रनिन्दापरम्–तत्र कौपीननिन्दा तन्मात्रधारणपरा । यतो वस्त्रद्वयेन तद्धारणं विधत्ते भरद्वाजः स्वसंहितायाम्–तामसं त्वेकवसनं राजसं वसनद्वयम् । कौपीनसहितं तत्तु सात्विकं मुनिभिः स्मृतम् ।। इति । एवं च यत्तु इति वचनम्–कर्णे पुष्पं कटौ सूत्रं वासोभिः परिवेष्टनम् । यावद्धारयते विप्रस्ताव-

च्छूद्रो न संशयः ॥ इति । अत्र द्वितीयपादम्--शिखायां वेणिबन्धनमिति केचित्पठन्ति । तदिदं कर्मकाले अलङ्कारनिन्दापरम् । अस्मिन्नेव वचने कर्णे पुष्पमित्यादि दर्शनात् । कटौ सूत्रं काञ्चीदामेति ज्ञेयम् । अतः कांचीदामकर्णावतंसोष्णीषकञ्चुकशिखावेण्यादिकमलङ्कारं कर्मकाले न कुर्यादित्यर्थः । अत एव आपस्तम्बादिभिरलङ्कारो निषिध्यते--अनावित्स्रगनुलेपनस्स्यात्सदा निशायां दारं प्रत्यलङ्कुर्वीतेति । मनुनापि--बहिर्माल्यं न धारयेदिति । तदेवं कटिसूत्रस्य कर्माङ्गत्वेन विहितत्वेपि केषांचित्तत्परित्यागः श्राद्धे तिलकबुध्या पुण्ड्रत्यागवद्वचनार्थापरिशोधनकृतमिति ज्ञेयं । तच्च कटिसूत्रं व्यतिस्यूतमेव धार्यं तस्यैव विधानात् विवर्तितस्य रौद्रत्वाच्च । तथाहि भरद्वाजः -- युग्मैर्विवर्तितं रौद्र अयुग्मैर्ब्राह्ममुच्यते ॥ उभयैस्तैर्व्यतिस्यूतं वैष्णवं कटिबन्धनम् । उपवीतं सदा ब्राह्मं वैष्णवं कटिबन्धनम् । कटिसूत्रं व्यतिस्यूतं कुर्यात्सूत्रैस्तु पञ्चभिः ॥ इति । तथा दर्भाक्षसूत्ररुद्राक्षपुण्ड्नाम विभूषणम् । मेखला मन्त्रमर्चेति रौद्राण्येतानि वर्जयेत् ॥ इति । रौद्रं सूत्रं वर्तुलकटिसूत्रं । अत्र कौपीनं परवस्त्रं च छिद्रं च मलिनन्तथा । एवंविधानि वस्त्राणि वर्जयेच्छ्राद्धकर्मणि ॥ इति स्मृतिसारसमुच्चये श्राद्धे कौपीननिषेधात्, तस्य च सर्वकर्मोपलक्षकत्वात् उदाहृतसंवर्त्तादिवचनानां च नग्नपरत्वाङ्गीकारेण तदेकार्थत्वात् । कौपीनविधायकभरद्वाजवचनानां च परस्परविरुद्धत्वाच्च केचित्कौपीनधारणस्य विकल्पमिच्छन्ति, तदयुक्तं, भारद्वाजवचने कौपीनं विना वस्त्रद्वयमात्रधारणस्य राजसत्वकथनेन तस्य अवैष्णवत्वनिश्चयात् श्राद्धे तन्निषेधस्य च तन्मात्रधारणपरत्वात् विकल्पासिद्धेरिति । श्रीवैष्णवसमयाचारनिष्कर्षे अष्टमविवेके--ब्राह्मणेन त्रीणि वासांसि धार्याणि । अन्तर्वासः बहिर्वासः, उत्तरीयं चेति । இப்படி मनुविज्ञानेश्वरीयप्रसिद्धम् । अन्तर्वासस्तु

कौपीनमलमल्पकमेव च इति । ஆகையாலே விவேகியான பிராம்மணருக்கு अन्तर्वासमान कौपीनधारण सहितयोक्तोत्तरीय-धारणं शास्त्रविहितமாகக் குறையில்லை. इति । अतः प्रपन्नैः कौपीनं कटिसूत्रं च वस्त्रयुग्मं च धारणम् । शिखा छिद्रोर्ध्वपुण्ड्रं च विष्णुभक्तस्य लक्षणम् ॥ इति संहितोक्तरीत्या व्यतिस्यूतकटिसूत्र-द्वयसहितं कौपीनं धार्यमेव इति सिद्धम् ॥

इति श्रीसदनुष्ठानदर्पणे कौपीनधारणविषयो नाम द्वितीयं प्रतिफलनम् ॥

---

## ॥ तृतीयप्रतिफलनम् ॥

---

सदा पवित्रधारणानावश्यकत्वविषये प्रमाणम्—

प्रपन्नानां सदा दर्भपवित्रधारणमनावश्यकं वचनात्, शिष्टाचाराच्च । तथाहि वासिष्ठसंहितायाम्—सपवित्रेण हस्तेन षट् कर्माणि समाचरेत् । पवित्ररहितान्यानि विफलानि भवन्ति हीति । चन्द्रिकायां दर्भपाणिस्सदा तिष्ठेदिति । अपवित्रकृतं कर्म विप्रस्य विफलं भवेदिति च पवित्रधारणस्य फलवैशिष्ट्यप्रतिपादनेन लक्ष्मीतन्त्रादौ तमस्त्रं नैव कुर्वीतेत्यादिभिः फलाभिषङ्गयुक्तस्य प्रपन्नानावश्यकत्व-प्रतिपादनात् सर्वदा तद्धारणमनावश्यकम् । तथोक्तं पूर्विकसंग्रहे—अङ्गुष्ठानामिकाभ्यां तु छिन्नं पैतामहं शिरः । रुद्रेण जातिस्मरणा-त्ततः कालात्करोऽशुचिः ॥ तस्मात्पवित्रहस्तार्थं कुशकाञ्चनधारण-मिति व्यासस्मरणात् । ब्रह्मशिरश्छेदनप्रयुक्ताशुचिनिवर्तनद्वारैव पवित्रस्य कर्मोपयोगित्वं स्पष्टम् । ततश्च सर्वात्मना प्रपन्नस्य ब्रह्म-रुद्रादिसंबन्धाभावस्य देवर्षिभूतात्मनृणामिति वचनसिद्धतया रुद्रकृत-शिरश्छेदमूलकाशुद्ध्यप्रसक्तेः ॥ मृतास इद्धहन्तः तेन पूतस्तरती-

त्यादिश्रवणात्, पञ्चसंस्कारेणैव पूतत्वाच्च, दर्भादिपवित्रधारण निष्फलमेव। प्रत्युत ब्रह्मास्त्रशगवल्कलन्यायेन दर्भपवित्रधारणेन चरणं पवित्रमित्युक्तपवित्रधारणमवमानितं भवेदिति सच्चरित्रपरित्राणे रत्नावल्याम्–तस्मात्पवित्रं सततं द्विजैर्वेदपरायणैः। कर्मानुष्ठाननिरतै-र्धार्यं नेतरजातिभिः॥ इति। विश्वामित्रः–पवित्रं धारयेन्नित्यं कौशेयं दक्षिणे करे। भोजनादौ विशेषेण ह्यन्नदोषैर्न लिप्यते॥ इति। अन्यत्रापि अशुचिरपवित्रकरः प्रलपन्न जपेदिति, दर्भपवित्र-धारणस्य नियतत्वमुक्तम्। तथापि हारीतेन–जपकर्महरा एते ह्यसुरा व्यक्तरूपिणः। पवित्रकृतहस्तस्य विद्रवन्ति दिशो दशेति पवित्र-धारणस्य असुरविद्रवणं फलं इत्युक्तम्। सपवित्रेण यो भुङ्क्ते सर्व-यज्ञफलं लभेदिति च काम्यत्वं तेनैवोक्तं। विश्वामित्रेण च– भोजनादौ विशेषेण ह्यन्नदोषैर्न लिप्यते इति पवित्रधारणस्य, अन्नदोषस्पर्शाभावः फलं इत्युक्तं। तस्मात्पवित्रं सततमिति वचनमितरजातीनां पवित्रं निषेधपरम्॥

तच्छेषतया तु तस्मात्पवित्रं सततमित्यादिकमिति, न तत्र द्विजानां धारणनियमे तात्पर्यम्। तथा च एतत्सर्वं वैष्णवव्यति-रिक्तानां अत्यावश्यकं वैष्णवानां तु नावश्यकं। भूतप्रेतपिशाचाश्च डाकिन्यश्च वसुन्धरे। सर्वं तत्प्रशमं याति यत्र चक्राङ्कितो वसेत्। राक्षसाश्च पिशाचाश्च गन्धर्वा दैत्यदानवाः॥ कृष्णायुधाङ्कितं देहं दृष्ट्वा नश्यन्ति दूरतः। इत्यादि वराहब्रह्माण्डवचनैः असुराद्यनव-काशावगमात्। सर्वेषणा विनिर्मुक्तानां यज्ञफलकामनाविरहात् न तदर्थं भोजने पवित्रधारणमावश्यकं। भगवद्यागशिष्टाशिनां अन्न-दोषानवकाशेन तदस्पर्शार्थमपि पवित्रधारणमनावश्यकम्। पवित्र-धारणेन विना कृतस्य कर्मणः क्वचिदासुरत्वकथनं हारीतवचनानु-सारेण असुरग्राह्यत्वपरम्, न तु प्रत्यवायपरं। कर्णमूले तु तुलसीं

यस्तु धारयते नरः। अहोरात्रकृतं पापं तस्य नश्यति तत्क्षणात् ॥ इत्युक्ततुलसीधारणतत्फलार्थत्वात् अनित्यमेवेदं दर्भपवित्रधारण। एवं सत्यपि वैष्णवैः केषुचित्कर्मसु दर्भपवित्रधारणं अभ्युच्चयः ॥

कैश्चिद्वैष्णवैस्सर्वकर्मसु तद्धारणमपि अभ्युच्चयमात्रं। इति। करणे अभ्युदयजनकं कर्म अनावश्यकं। दार्भं पवित्रं सौवर्णं सर्वकर्मसु शोभनम्। पवित्रं राजतं त्याज्यं वैष्णवैस्तु विशेषतः॥ पवित्रं राजतं धार्यं शिवभक्तैर्विशेषतः। रुद्रनेत्रोद्भवं यस्माद्दिवे कर्मणि वर्जयेत्। विश्वामित्रं वैष्णवेन सर्वकर्मणि शोभनम्॥ धार्यमित्याह भगवान् मनुः स्वायम्भुवो मुनिः॥ इति वासिष्ठसंहितोक्तरीत्या॥ स्मृतौ—कुशं ब्रह्ममयं प्रोक्तं विश्वामित्रं तु वैष्णवम्। काशं रुद्रमयं प्रोक्तं तस्मात्तत्परिवर्जयेत्॥ इति। सौवर्णं दर्भजन्यं च पवित्रमुभयं वरम्। इति काश्यपस्मृत्युक्तरीत्या, कुशया वा सुवर्णेन पवित्रं धारयेच्छुचिः इति पराशरसंहितोक्तरीत्या च, अन्यानि च पवित्राणि कुशादूर्वात्मकानि च। हेमात्मकपवित्रस्य ह्येकां नार्हन्ति वै कलाम्। इत्युक्तरीत्या च सदा शिष्टैः सौवर्णपवित्रधारणं आनृशस्यार्थं इति ज्ञेयम्। अतः प्रपन्नानां सर्वदा दर्भपवित्रधारणमनावश्यकं। यथोक्तप्रकारानावश्यकत्वे करिष्य इति संकल्पपूर्वकं कर्मणां अननुष्ठानप्रसंग इति नाशंकनीयम्॥

योगवासिष्ठे—सक्ताः कर्मण्यविद्वांसः यथा कुर्वन्ति भारत। कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम्। इति। योगशास्त्रे—जातस्य द्विविधौ ज्ञेयौ पन्थानौ वेदचोदितौ। अनुष्ठितौ तु विद्वद्भिः प्रवर्तकनिवर्तकौ। वर्णाश्रमोक्तं यत्कर्म कामसंकल्प पूर्वकम्॥ प्रवर्तकं भवेदेतत्पुनरावृत्तिहेतुकम्। कर्तव्यमिति विध्युक्तकर्म कामविवर्जितम्॥ येन तत्क्रियते सम्यक् प्रज्ञायुक्तं निवर्तकम्। निवर्तकं तु पुरुषं निवर्तयति जन्मतः॥ प्रवर्तकं तु सर्वत्र पुनरावृत्ति हेतुकम्। इति॥

भरद्वाजस्मृतौ – बाह्यस्सदा सतां नास्ति भेदः प्रायेण कर्मसु । संकल्पादेव भिन्नानि स हेतुर्बन्धमोक्षयोः ॥ जगद्धातुर्महेशस्य दिव्याज्ञाधारिणो वयम् । इतीति याः क्रियाः कुर्युः स्निग्धा ये वैष्णवास्तु ते । इति । पुराणसंग्रहे–ब्रह्मण्याधाय कर्माणि निस्सङ्गः कामवर्जितः । प्रसन्नेनैव मनसा कुर्वाणो याति तत्पदम् ॥ इति प्रपन्नानुष्ठेयांशस्य लोकरीत्या कर्तव्यत्वप्रतिपादनात् । अत्रेदमवधेयं–प्रपन्नाधिकारिणः त्रिविधाः अज्ञाः, ज्ञानाधिकाः, भक्तिपरवशाश्चेति । अज्ञप्रपन्नाः प्रथमं भगवल्लाभार्थसाधनानुष्ठानोचित ज्ञानशक्तिरहिताः अस्मदादयः । ज्ञानाधिकप्रपन्नाः ज्ञानशक्तिसद्भावेपि भगवदत्यन्तपरतन्त्रस्वरूपयाथात्म्यदर्शनप्रयुक्त स्वरूपविरुद्धोपायान्तरपरित्यागोचितज्ञान पूर्तियुक्ताः श्रीमन्नाथयामुनयतिवरलोकाचार्यवरवरमुन्यादयः । भक्तिपरवशप्रपन्नाः भगवन्निर्हेतुकप्रसादलब्धभक्त्यतिशयायत्तकरणशैथिल्यात् एकैकसाधनानुष्ठानाक्षमतया अनन्यगतयः अर्चावतारे प्रपत्तिं कुर्वाणाः श्रीमच्छठारिसूरिप्रभृतयः ॥

अत्र प्रमाणानि लक्ष्मीतन्त्रे–इदं शरणमज्ञानामिदमेव विजानताम् । इदं तितीर्षतां पारमिदमानन्त्यमिच्छताम् । इति । शौनकवचने– अज्ञ सर्वज्ञ भक्तानां गतिर्गम्यो भवेद्धरिः । इति । श्रीभट्टार्यसूक्तौ – अविद्यातो देवे परिबृढतया वा विदिततया स्वभक्तेर्भूम्ना वा जगति गतिमन्यामविदुषाम् । गतिर्गम्यश्चासौ हरिरिति जितन्ताह्वयमनोरहस्यं व्याजह्रे स खलु भगवान् शौनकमुनिः ॥ इति । श्रीवचनभूषणदिव्यशास्त्रे – अज्ञருக்கும், ज्ञानाधिகருக்கும், भक्तिविवशருக்கும், इत्यादि कर्म ज्ञानभक्ति प्रपत्ति आचार्याभिमानाः मुक्तिं प्रति पृथक् पृथक् व्याजभूताः । तथैवानुगृहीतं अर्थपञ्चकरहस्ये–உபாயந்தான். कर्मज्ञानं भक्तिः प्रपत्ति आचार्याभिमानமென்றைந்து इति । कर्मादीनां साधनकोटिनिविष्टत्वे त्याज्यत्वं । जनकादयः कर्मयोगनिष्ठाः, ज्ञान-

भक्त्यन्वितं कर्म जनकादिषु दृश्यते, कर्मणैव हि संसिद्धिमास्थिता जनकादयः । इति गीतत्वात् ॥

भरतादयः ज्ञानयोगनिष्ठाः कर्मभक्त्यन्वितं ज्ञानं प्रायेण भरतादिष्वित्युक्तेः । प्रह्लादादयो भक्तियोगनिष्ठाः—कर्मज्ञानान्विता भक्तिः प्रह्लादप्रमुखाश्रयेति । दृश्यमानो महोरगैः न विवेदात्मनो गात्रं तत्स्मृत्याह्लादसंस्थितः इत्याद्युक्तेः । परांकुशदिव्यसूरिभक्तेः परिणामत्रये சூழ் விசும்பணி முகில் त्यतः पूर्वत्र परभक्तिः சூழ் விசும்பணி முகில் इत्यत्र परज्ञानं முனியே நான்முகனே इत्यत्र परमभक्तिः । तथैव षट्त्रिंशत्सहस्रिका व्याख्यायां முனியே நான்முகனே इति गाथा व्याख्यायां प्रतिपादितत्वात् । साक्षात्काराभिनिवेशः परभक्तिः साक्षात्कारः परज्ञानम् । अनुभवाभिनिवेशः परमभक्तिः । इत्थं दृष्टविधया स्वसजातीय साधनान्तराव्यवहित-साधनं । श्रुतप्रकाशिकायाम् – शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम् । भक्त्या लभ्यस्त्वनन्यया – ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं चे युक्तप्रकारेण ज्ञानदर्शन प्राप्तिसाधन भूता भक्तिरिति भक्तिस्वरूप-मनुगृहीतं । स्थलान्तरे – दर्शनं परभक्तिस्स्यात् परज्ञानं तु संगमः । पुनर्विश्लेषभीरुत्वं परमा भक्तिरुच्यते ॥ इत्युक्तं । पूर्वाचार्यनिर्वाहः – भक्तिस्त्रिविधा भक्ति, परभक्ति, परमभक्तिभेदात् । तत्र भक्तिर्नाम भगवद्गतस्वामित्वस्वगतदास्यानुसन्धानजनितस्नेहपूर्वकवृत्तिः । पर-भक्तिश्च भगवत्संश्लेषविश्लेषैकसुखदुःखिता । परमभक्तिस्तु भगव-द्विश्लेषे सत्ताहानिजनकनिरवधिकप्रीत्यात्मकावस्थाविशेषः इति ॥

भक्तिः द्विविधा । साधनभक्तिः, साध्यभक्तिश्चेति । कर्म-ज्ञानसाध्या, अदृष्टद्वारा भगवत्प्राप्ति साधनभूता भक्तिः साधनभक्तिः । इयं स्वार्थपरस्य उपासकस्य पूर्वजन्मसुकृत विशेषेण जायते ॥ जन्मान्तरसहस्रेषु तपोज्ञान समाधिभिः । नराणां क्षीणपापानां कृष्णे

भक्तिः प्रजायते ॥ इत्युक्तेः । इयं विवेक विमोकादिसाधन सप्तक-वर्धिता ध्रुवानुस्मृतिरूपा प्रत्यक्षसमानाकारा, निरतिशय प्रीति-रूपापन्ना उभयपरिकर्मित स्वान्तस्येत्युक्तरीत्या कर्मज्ञानसंस्कृतान्तः करणस्य चेतनस्य जायमानतया चेतनसाध्या। भगवत्प्रसादनोपायतया तत्प्राप्तिसाधनभूता वेदनोपासनादिशब्दवाच्या भक्तिरिति शास्त्रसिद्धा। तथा स्वार्थानुभवसिद्धिः । स्वयं प्रयोजनभूता इष्टविधया भगवत्प्राप्ति-साधनभूता भक्तिः साध्यभक्तिः। इयं भक्तिः परार्थपरस्य चेतनस्य निर्हेतुक भगवत्कटाक्षेण जायते। श्वेताश्वतरोपनिषदि शेषोपनिषदि च सत्वस्यैव प्रवर्तकः इति। महाभारते मोक्षधर्मे-पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः। रजसा तमसा चास्य मानसं समभिप्लुतम्। इति। जायमानं हि पुरुषं यं पश्येन्मधुसूदनः। सात्विकस्स तु विज्ञेयः स वै मोक्षार्थचिन्तकः। इत्याद्युक्तेः। इयं विवेक विमोकादि साधनसप्तकवर्धिता ध्रुवानुस्मृतिरूपा प्रत्यक्षसमानाकारा अत्यन्तं निरतिशयप्रीतिरूपापन्ना, भगवत्प्राप्त्यव्याजसाधनभूता वेदनोपासनादि शब्दवाच्या, भक्तिरिति वेदान्तशास्त्रसिद्धा। तथा परार्थानुभवसिद्धि र्भवति। अत्र प्रमाणं भगवच्छास्त्रे-साधनं भगवत्प्राप्तौ स एवेति स्थिरा मतिः। साध्यभक्तिस्स्मृता सैव प्रपत्तिरिति गीयते॥ उपायो भक्तिरेवेति तत्प्राप्तौ या तु सा मतिः। उपायभक्तिरेतस्याः पूर्वोक्तैव गरीयसी ॥ उपायभक्तिः प्रारब्धव्यतिरिक्ताघनाशिनी । साध्य-भक्तिस्तु सा हन्त्री प्रारब्धस्यापि भूयसी ॥ इति ॥

सिद्धतात्पर्यटिप्पणि ग्रन्थे-एवंभूतायाः भक्तेः साधनतया विधेयत्वं कथमित्याकांक्षायां विवेकविमोकादि विशिष्टवेषेणोपपद्यते। इत्यभिप्रायेणाह - एवंरूपायाः ध्रुवानुस्मृतेः साधनानि यज्ञादीनि कर्माणीत्यादिना। अयं भावः-राग प्राप्ताया एव भक्तेर्यो मामव्यभि-चारेण भक्तियोगेन सेवते। भज इत्येष धातुर्वै सेवायां परिकीर्तितः।

तस्मात्सेवा बुधैः प्रोक्ता भक्तिशब्देन भूयसी ॥ इत्यादिभिः कैंकर्यरूपत्वं च सिद्धम्। कैंकर्यस्य च स्वयन्तु रुचिरे देशे क्रियतामिति मां वद। इत्युक्तरीत्या विधेयत्वमावश्यकम्। तथा च, केन रूपेण भक्तेः भगवदाराधनरूपतया कर्तव्यता विधिरित्याकांक्षायां यज्ञादिविशिष्टवेषेणवेत्युच्यत इति। एवं भक्तिरूपभगवदाराधनान्तर्भावेन तदङ्गतया अनुष्ठीयमानानां यज्ञादीनां भक्तिवर्धकत्वोक्तिस्तु संभावितस्वभावाभिप्राया, यज्ञादिरूपभगवदाराधनविशेषाणां स्वयं प्रयोजनभगवन्मुखोल्लासजनकतया तादृशमुखोल्लासस्य च निग्रहोपेक्षादिप्रत्यनीकतास्वाभाव्यात् प्रसंगात् प्रतिबन्धकाभावसंपादनद्वारा भक्तिवर्धकत्वसंभवात्। यथा मङ्गलार्थमारोपितस्यापि दीपस्य तिमिरप्रत्यनीकता स्वभावतया यद्दर्शनकरणत्वं प्रसंगात् भवति। एवमेव स्वयं प्रयोजनभगवन्मुखोल्लासजनककैंकर्यस्यापि प्रसंगात् भक्तिसाधनत्वमिति नानुपपत्तिः इति। तत्रैव—एतेन भक्तेः फलेच्छारूपत्वेन अधिकारिविशेषणत्वं साधनत्वाभावश्चादर्शि। न ह्येवंविधायाः फलेच्छारूपायाः केवलविषयवैलक्षण्य ज्ञानाधीनायाः कषायपानवत्साधनतया विधेयत्वमुपपद्यते ॥

तथा च—जायमानं हि पुरुषं यं पश्येन्मधुसूदनः। सात्विकस्स तु विज्ञेयस्स वै मोक्षार्थचिन्तकः ॥ इति भगवत्कटाक्षाधीना या मुमुक्षा प्रतिपादिता। सैव भगवत्कृषिपरंपराभिः क्रमशः प्रतिबन्धकीभूतविषयान्तरप्रावण्याद्यपगमात् उत्तरोत्तरं वर्धमाना सती "एष एव साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति इत्युक्तभगवत्प्रयोज्याधिकारिविशेषणीभूतातिमात्रानुकूल्य व्यवसायात्मकनां—यस्य देवे परा भक्तिः यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ मायां न सेवे भद्रन्ते न वृथा धर्ममाचरे। शुद्धभावं यतो भक्त्या शास्त्राद्वेद्मि जनार्दनम् ॥ इति।

उक्तब्रह्मविद्यासहकार्यन्तर्गतपाण्डित्याद्युपकारकत्वम्, यमेवैष वृणुते इति भगवद्वरणीयाधिकारिविशेषणत्वम् अज्ञसर्वज्ञभक्तानां स्वभक्तेर्भूम्ना वेत्युक्तशरणागत्यधिकारिविशेषणत्वम् ॥

साधनं भगवत्प्राप्तौ स एवेति स्थिरा मतिः । साध्यभक्तिस्तथा सैव प्रपत्तिरिति गीयते ॥ इत्युक्तसाध्यभक्तिरूपतां, भगवन् भक्तिमपि प्रयच्छ मे । स्थानत्रयोदितपरभक्तियुक्तं मां कुरुष्व । तामेनां भगवन्नद्य क्रियमाणां कुरुष्व मे । इत्यादिप्रार्थ्यमानमोक्षदशाभावि भगवदनुभवकैङ्कर्योपकरणभूतफलभक्तिताम् । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् । इत्याद्युक्तभोजनार्थक्षुधावत् अत्यन्ताभिनिवेशरूपतया, भगवत्प्राप्त्यव्यवहितहेतुतां च प्राप्नोतीति । परमभक्तिपर्यन्तानां भक्तिविशेषाणां सर्वेषां मुमुक्षापरिणामरूपत्वात् भक्तेरधिकारिविशेषणत्वमेवेति भगवदभिप्रायो दर्शितः इति स्वीकृतसिद्धसाधनैः प्रपन्नैः इयं साध्यभक्तिः भगवन् भक्तिमपि प्रयच्छ मे । इत्याद्युक्तरीत्या भोजने क्षुधावत् उपेयभूतकैङ्कर्योपकरणत्वेन प्रार्थ्यमाना सती इमां प्रकृतिं स्थूलसूक्ष्मरूपां विसृज्य तदानीमिति गद्याद्युक्तरीत्या शरीरवियोगानन्तरं भगवत्प्राप्तेः पूर्वं सिध्यति । अत्र प्रमाणतया जन्मान्तरसहस्र ... நல் தவங்களாலே க்யாத குலங்களிலே பிறந்து इत्यारभ्य இத்தை साध्य மாக இரக்கப் ப்ராப்திக்கு முன்னே ஸித்திக்கும் इत्यन्ताचार्यहृदयसूक्तिरनुसन्धेया ॥

साधनभक्तिः पराशरादौ, साध्यभक्तिः प्रपन्नजनकूटस्थानां भक्तिपारवश्यप्रपन्नानां परांकुशमुनीनां देहयात्राशेषा । षट्त्रिंशत् सहस्रिका व्याख्यायां प्रथमगाथा व्याख्याने இவருடைய பக்தி தேஹயாத்ரா சேஷமாயிருக்கும் इत्यनुगृहीतं । इयं भक्तिः साधयित्वा लब्धसाधनभक्त्यपेक्षया प्रार्थयित्वा लब्धसाध्यभूतकैङ्कर्य-

भक्त्यपेक्षया च विलक्षणं अत्र இது உபய முமன்றிக்கே इत्यारभ्य सत्ताभोगवत्युप காணமாவதொன்றி त्यन्त आचार्य-हृदयसूक्तिरनुसन्धेया ॥

कैङ्कर्यरूपभक्तिः – ज्ञानाधिक्ये प्रपन्नेषु श्रीमन्नाथमुनियामुनाचार्ययतिवरवरवरमुन्यादिषु प्रपत्तिश्च द्विविधा साधनप्रपत्तिः, साध्यप्रपत्तिश्चेति। तत्र साधनप्रपत्तिः स्वगतस्वीकाररूपा। सैव अदृष्टविधया साधनं स्वार्थकैङ्कर्यरूपं फलम्। साध्यप्रपत्तिः परगतस्वीकाररूपा सैव दृष्टविधया साधनं अधिकारिविशेषणं भवति परार्थकैङ्कर्यरूपं फलम् ॥

श्रीवचनभूषणमीमांसाभाष्ये "தன்னால் வரும் நன்மை விலைப் பால் போலே, அவனால் வரும் நன்மை முலைப் பால் போலே," इत्यादिव्याख्यानावसरे – तथा च स्वगतस्वीकारपर्यन्तसाधनान्तरानुष्ठातृविषये भगवतः कर्मानुगुणफलप्रदत्वेनाप्रधानकारणतया साधनानुष्ठातुश्चेतनस्यैव प्रधानकारणत्वात्, स्वगतस्वीकारपर्यन्तसाधनानुष्ठानतत्फलस्वार्थानुभवादिरूपास्सर्वेऽपि धर्माः स्वेनैवागतसत्वान्तर्गतत्वात् क्रीतक्षीरवद्दोषदुष्टतया त्याज्या एव–परगतस्वीकारफलीभूत स्वगत स्वीकारतत्कार्य परार्थानुभवादिस्थले चेतनस्य प्रयोज्यत्वेनाप्रधानतया भगवत एव प्रधानकारणत्वात्। परगतस्वीकारफलस्वगत स्वीकारादयस्सर्वेऽपि तेनैवागतसत्वान्तर्गतत्वात् स्तनन्धयस्य मातृस्तन्यवत् गुणोत्तरत्वात् सर्वेषामुपादेया एवेति स्वरसत एव सिध्यति इति स्वगतस्वीकारपरगतस्वीकारनिरूपणं कृतं। अत्र पूर्वाचार्यनिर्वाहः – भगवत्प्राप्तिकामश्च त्रिविधः – उपासकः, साधनप्रपत्तिनिष्ठः, सिद्धसाधननिष्ठश्चेति। तत्र उपासकः, स्वरूपे निवृत्तममकारः उपायपुरुषार्थयोः ममकारविशिष्टः। साधनप्रपत्तिनिष्ठः स्वरूपोपाययोः निवृत्तममकारः पुरुषार्थे ममकारविशिष्टः। सिद्धसाधन

निष्ठः स्वरूपोपायपुरुषार्थेषु निवृत्तममकार इति । अत्र चरमोपायनिष्ठः सिद्धोपायनिष्ठाधिकारी सर्वोत्तमः इति मन्तव्यः – विष्णूपायो योऽन्यफलस्सोऽधमः परिकीर्तितः । अन्योपायो विष्णुफलो मध्यमः परिकीर्तितः ॥ माधवांघ्रिद्वयोपायो माधवांघ्रिप्रयोजनः । स उत्तमोऽधिकारी स्यात् कृतकृत्योऽद्य जन्मनि ॥ इति । विहगेश्वरसंहितायां योगपादे उत्तरखण्डे सप्तसप्ततितमेऽध्याये–मत्स्वीकारस्वरूपायाः प्रपत्तेरप्युपायताम् । इच्छन्ति केचित् दुर्दान्ताः सन्तो मामेव मन्यते ॥ अत्र तनिचरमरहस्ये – द्वितीयश्लोकोत्तरार्धपाठोत्तरं–यस्स एवोत्तमः प्रोक्तो माधवेनैव तेन वै ॥ इति । सत्कर्मनिरताश्शुद्धाः सांख्ययोगविदस्तथा ॥ नार्हन्ति शरणस्थस्य कलां कोटितमीमपि । इति भगवच्छास्त्रे प्रतिपादनादिति । स्थलान्तरे प्रपत्त्यादिलक्षणमुक्तम् – मुमुक्षुत्वे सति भगवत्प्रवृत्तिविरोधिस्वप्रवृत्तिप्रागभावासमानाधिकरणभगवत्प्रवृत्तिविरोधिस्वप्रवृत्तिनिवृत्तिः प्रपत्तिः मुक्तिव्याजभूता । ननु सिद्धान्ते प्रपत्तेः व्याजत्वमुच्यते । किमिदं व्याजत्वं? फलविसदृशत्वमिति चेत् । ज्योतिष्टोमादीनामपि फलविसदृशत्वेन व्याजत्वप्रसङ्गः । तर्हि गौणत्वमिति चेत् मन्त्रस्नानादीनां गौणतयाभिमतानां व्याजत्वप्रसङ्गः । अत इदं दुर्वचमिति चेन्न–अहेतुत्वे सति अतिप्रसङ्गवारकत्वमिति निरुक्तेस्सूपपादत्वात् । अधिकारिविशेषणत्वमपि इदमेवेति च गीयते । इति । उपासकाः अनुग्रहविषयीभूताः । तेषां केवलानुभवः । परगतस्वीकारनिष्ठाः कृपाविषयभूताः । तेषां कैङ्कर्यपर्यन्तानुभवः क्षोभनिवृत्त्यात्मकः प्रसादः ॥

स्वार्थकैङ्कर्यपरविषये–पिता च रक्षकश्शेषी भर्ता ज्ञेयो रमापतिः । स्वाम्याधारो ममात्मा च भोक्ता चाद्य मनूदितः ॥ अकारेण प्रकृत्या तु पितापुत्रत्वमुच्यते । धातुना रक्ष्यरक्षत्वं प्रत्ययाच्छेषशेषिता ॥ उकारे भर्तृभार्यात्वं ज्ञातृज्ञेयं मकारतः । नमसा स्वामि-

भृत्यत्वं श्रीशचेतनयोस्सदा ॥ नारायणपदे षष्ठ्या त्वाधाराधेयतोच्यते। तस्मिन् स्थितबहुव्रीह्या देहिदेहत्वमीर्यते । तस्मिन् स्थितचतुर्थ्या तु भोक्तृभोग्यत्वमुच्यते ॥ एवं संबन्धनवकं मन्त्रज्ञेयं मुमुक्षुभिः। इत्याद्युक्तसंबन्धविशेषजन्यस्नेहात्मिका प्रीतिः। परार्थकैङ्कर्यपरविषये–निरुपाधिकासंकुचितसर्वस्वामित्वं यथेष्टविनियोगहेतुभूतसंबन्धविशेषात्मकशक्तिविशेषरूपं। शेषित्वं नाम स्वामित्वप्रतिनियतनिरुपाधिकासंकुचितचेतनाचेतनविनियोक्तृत्वं । उपासकविषये विद्यायाः प्रतिबन्धनिरासः फलं, ब्रह्मप्राप्तिः स्वतस्सिद्धा, समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इति श्रुतेः। अस्याः श्रुतेरर्थः – समुत्थाय अर्चिरादिगत्या गत्वा, परं ज्योतिरुपसंपद्य आत्यन्तिकलयरूपब्रह्मसंपत्तिं प्राप्य विरजास्नानामानवकरस्पर्शानन्तरं, स्वेन रूपेणाभिनिष्पद्यते, आविर्भूतगुणाष्टको भवति, निरतिशयप्रीतिकारितकैङ्कर्ययुक्तो भवतीति यावदिति। विद्यारम्भे भगवान् क्षमिष्यामीति सङ्कल्पं करोति। विद्यानिर्वृत्तौ भगवान् क्षान्तमिति संकल्पं करोति। अतः विद्यया भगवत्प्रसादः। तस्मात् प्रतिबन्धकनिवृत्तिः फलमिति मन्तव्यम् ॥

परार्थकैङ्कर्यपरप्रपन्नविषये–जायमानकालकटाक्षमारभ्य कैङ्कर्यपर्यन्तं फलकोटिनिविष्टम्। स्वार्थत्वानुबन्धिमोक्षः स्वरूपविरुद्धः, परार्थत्वानुबन्धिमोक्षः शेषत्वपारतन्त्र्यस्वरूपानुरूपः। मिश्रसत्वगुणेन कलेवरादिविशिष्टवेषेण उपासनन्यासादिसाधनप्रवृत्तिः निष्कृष्टसत्वगुणेन द्वयश्रवणादिप्रवृत्तिः। दया जायमानकालकटाक्षायत्ता ॥ चेतनविषयीकारे जायमानकालकटाक्षस्य प्रयोजकानि कृपा प्राप्तिः पुरुषकारः रक्षणोन्मुखस्वातन्त्र्यं इति चत्वारि। चेतनविषये–पापकर्मप्रवृत्तिनिवर्तने शक्तस्य भगवतः तदनिवारणे प्रयोजकं विरोधिस्वातन्त्र्यं। तच्च भगवति लीलार्थस्वातन्त्र्यं स्वातन्त्र्यायत्तविषयीकार-

निरूपणे प्रमाणम् । नाहं पुरुषकारेण न चाप्यन्येन हेतुना । केवलं स्वेच्छयैवाहं प्रेक्षे कञ्चित्कदाचन ॥ इति वचनं । कृपायत्त-विषयीकारस्य प्रयोजिका प्रातिकूल्यव्यवसायनिवृत्तिः । तन्निवृत्ति-दशा ...... निरीक्षणनिरूपणे प्रमाणम् ॥

अहिर्बुध्न्यसंहितायां चतुर्दशाध्याये नारदं प्रति रुद्रः यथा हि मोषकाः पान्थे परिग्रहमुपेयुषि । निवृत्तमोषणोद्योगाः तदा सन्त उदासते ॥ अनुग्रहात्मिकायास्तु शक्तेः पातक्षणे तथा । उदासते समीभूय कर्मणी ते शुभाशुभे ॥ तत्पातानन्तरं जन्तुः युक्तो मोक्ष समीक्षया प्रवर्तमान वैराग्यो विशेषाभिनिवेशवान् ॥ आगमाननु-संचिन्त्य गुरूनप्युपसर्प्य च । लब्धसत्त्वः प्रकारैस्तैः प्रबुद्धो बोध-पालनः ॥ इत्यादिवचनं भोगार्थस्वातन्त्र्यं प्राप्तेः अनुकूलम् । प्राप्तिः भगवति स्वातन्त्र्यनिवृत्तौ सत्याम् । प्राप्त्या विषयीकारस्य कार्य-करत्वम् । पुरुषकारायत्तविषयीकारे प्रयोजकम् तत्सन्निध्यागमनादि तद्विषये प्रमाणम् ॥

पाद्मोत्तरे अष्टचत्वारिंशाध्याये – प्राणसंशयमापन्नं दृष्ट्वा सीता च वायसम् । त्राहि त्राहीति भर्तारमुवाच दयया विभुम् ॥ इत्यादि । मोक्षं प्रति चेतने अनिषेधस्य प्रयोजकत्वाङ्गीकारे सुषुप्त्यादौ अनिषेधात् मोक्षप्रसक्तिरिति चोद्ये कृते प्रतिबन्धकरहित प्राप्तेरभावात् न युक्ति-प्रसङ्गः । तत्र भगवतः लीलार्थस्वातन्त्र्य-विरोधि-भरतप्रपत्तौ भगवत्-स्वातन्त्र्यादैकरूप्यवत् द्राविडसामवेद सहस्रशाखा व्याख्यायां षट्-सहस्रिकायाम् – ஈச்வராநுபாயமாைல் ப்ரபத்தி உபாய மன்று भक्ति உபாயமாகில் ஈச்வரன் உபாயமன்று इत्यनु-गृहीतम् । ननु मुक्त्यनन्तरं स्वार्थकैंकर्य परार्थकैंकर्यादि-फलभेद-कल्पनं न युज्यते । तदा माध्वमत प्रसंग इति माशंकिष्ठाः । तैः मुक्तौ आनन्दतारतम्यादिकमङ्गीकृतम् । तद्वन्नास्माभिरुच्यते । फलतार-

तम्यमपि न कल्प्यते। आत्मेति तूपगच्छन्तीति सूत्रभाष्ये-यथावस्थितं च ब्रह्मोपास्यम् – अयथोपासने हि ब्रह्मप्राप्तिरप्ययथाभूता स्यात्। यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवतीति न्यायादिति। स्थलान्तरे-ब्राह्मणत्वजात्यादि विशिष्टवेषेणेत्यादि, कर्त्रधिकरणे प्राप्ता प्राप्तविवेकेनेत्यादि श्रीभाष्य श्रीसूक्तिभिः उपासनानुगुणफलावश्यकत्वस्य प्रतिपादनात्। न च मुक्तौ फलतारतम्यं नास्ति, विकल्पो विशिष्टफलत्वादिति सूत्रे विद्यायाः विकल्पः फले विशेषसामान्यरहितत्वादिति प्रतिपादनादिति वाच्यम्॥

तदा अत्र तत्तद्व्यक्तिभेदकालकृतादिभेदस्य सत्वात्। तत्क्रतुन्यायेन यथोपासनफलस्य वक्तव्यत्वेन परस्परं विरुद्धस्वार्थानुभवस्वार्थकैङ्कर्यपरार्थानुभवपरार्थकैङ्कर्यादिभेदसत्वात् हेत्वसिद्धिः। विकल्पो विशिष्टफलत्वादिति सूत्रे फलभूयस्त्वेन विद्यायाः साम्यं नास्तीति मत्वा पूर्वपक्षं कृत्वा विद्यायाः फले भूयस्त्वेन साम्यमस्तीति मत्वा सिद्धान्तः कृतः। स्वर्गरूपैकफलानां भिन्नशास्त्रार्थानां समुच्चित्य अनुष्ठानं पुरुषस्य संभवति। तद्वत् ब्रह्मविद्यायां न, तत्र फलस्य स्वल्पत्वात्। दर्शपूर्णमासाद्यनुष्ठाने फलभूयस्त्वस्य संपादितत्वात् तत्र समुच्चयो युक्तः। अत्र एकस्या ब्रह्मविद्यायाः अनन्तस्थिर ब्रह्मफलकत्वात् एकब्रह्मविद्यैवालम्। अविशिष्ट फलत्वात् अपरिच्छिन्नफलत्वादित्यर्थः। उत्तरत्र काम्येति सूत्रभाष्ये पूर्वहेत्वभावात् अपरिमितफलत्वादिति व्याख्यातत्वात् मुक्तनित्यानुभवविषये यथा कालकृतपरिच्छेदः अकिंचित्करः। तद्वत् विद्यानां बहुत्वेन भूयस्त्वेन अतिशयसंभवेपि चतुष्टयादिसंख्यायाः अकिञ्चित्करत्वं एकविद्यानिष्ठस्यैव पुरुषस्य अनन्तगुणक ब्रह्मानुभवात् तं यथा यथोपासते। तथैव भवतीति श्रुतिः। तत्र श्रुतौ यथोपासनं फलमिति प्रतिपादितम्। तत्क्रतुन्यायः अन्ययोगव्यवच्छेदार्थक एव। अप्रतीकालंबनेति सूत्र

श्रीभाष्यश्रुतप्रकाशिका एकात्मनः इत्यधिकरणकार्याधिकरणदीपादौ तत्र तत्र तत्क्रतुन्यायमालम्ब्य अन्ययोगव्यवच्छेदस्यैव कृतत्वात् यथाक्रतुन्याय विचारग्रन्थे च अन्ययोगव्यवच्छेदार्थकत्वस्यैव प्रतिपादितत्वात् तत्क्रतुन्यायः नत्वयोगव्यवच्छेदार्थकः । श्रीवचनभूषणमीमांसाभाष्ये फलनियमाधिकारे—ननु उक्तस्वरूपयाथात्म्यनिष्पत्तेरकामनाविषयत्वेऽपि प्राप्तिदशायां सर्वेषामपि स्वरूपयाथात्म्याविर्भावो न विरुध्यते । न च तत्क्रतुन्यायात्तदसिद्धिः । तस्य अयोगव्यवच्छेदकत्वात् । तदुक्तं वेदान्ताचार्यैः—उपासितगुणादेर्या प्राप्तावप्यबहिष्क्रिया । सा तत्क्रतुनयग्राह्या नाकारान्तरवर्जनमिति । ततश्च भक्तिप्रपत्तिरूपतत्त्वमेजन्यापूर्वस्थानीयनित्यसंकल्प सत्वेपि न तस्य फलदशायाम् आकारान्तरप्राप्तिप्रतिबन्धकत्वमिति चेत् सत्यम् । तत्क्रतुन्यायो हि उपासित गुणाविरुद्धाकारान्तरानुप्रवेशोभिमतः ॥

न तु उपासितगुणविरुद्धाकारान्तरानुमतिः । तथात्वे अयोगव्यवच्छेदस्यैव असिद्धिप्रसङ्गात् । अत्र च परार्थकैङ्कर्यप्राप्तिलक्षणस्वरूपयाथात्म्याविर्भावस्य स्वार्थानुभवकैङ्कर्य आविर्भावविरोधितया उपायदशायामुपासितस्य स्वार्थानुभवकैङ्कर्यप्रदत्वस्य फलदशायां बहिष्क्रियैव स्यात् । ततश्च यथाक्रतुश्रुत्यर्थरूपस्य उपासनषडङ्गजन्यस्य सङ्कल्पस्य परार्थानुभवकैङ्कर्याभिलाषाप्रतिबन्धकत्वान्न सर्वेषां तत्प्राप्तिः । न चास्य निग्रहरूपत्व अनुग्रहरूपत्वविकल्पकृतदोषसंभवः । न्यास्युपासकापेक्षयानुग्रहत्वाच्छरण.गतापेक्षया निग्रहत्वात् । यागादिजन्यस्वर्गादिप्रदानसंकल्पो हि—स्वर्गार्थ्यपेक्षयानुग्रहरूपो मुमुक्ष्वपेक्षया निग्रहरूपश्च दृश्यते तद्वत् । तस्मात्प्रणवावगतस्वरूपयाथात्म्यानुगुणपरार्थकैङ्कर्यप्रदत्वस्योत्तरचतुर्थ्यवगतस्य उत्तरवाक्ये उपास्यगुणत्वेनानुसन्धानात् । तत्क्रतुन्यायेन फलदशायामपि तत्सिद्धेः । अहमन्नमित्यादि श्रुतेश्च

परार्थकैङ्कर्यं सिद्धमितीति । कैवल्यनित्यत्वखण्डनशतदूषणीग्रन्थे तृतीयभङ्गे – तं यथा यथोपासते तथैव भवतीति श्रुतौ – तथैवेत्यैवकारेणानुपासिताकारप्राप्त्यव्यवच्छेदात् । अप्रतीकालम्बनानित्यादिसूत्रभाष्ये – तथोपासीनस्तथैव प्राप्नोतीत्यर्थः इति भाष्यकारैरपि तथैव भाषितत्वाच्च तदनुसरणानुरोधेन तत्क्रतुन्यायस्य अन्ययोगव्यवच्छेदकत्वसिद्धिर्दुष्परिहरा । न च विशेषणसङ्गतैवकारस्य अन्ययोगव्यवच्छेदकत्वाभावशङ्क्यः । अयं विद्वानेवेत्यनेनाविद्वत्त्वव्यवच्छेदप्रतीतेरानुभाविकत्वात् । सदेव सोम्येदमग्र आसीदित्यत्र इदंशब्दविशेषणीभूतसच्छब्दसङ्गतेनैवकारेण असत्त्वव्यावर्तनस्य भाष्यकारादिभिरनुगृहीतत्वाच्च । व्यक्तं चेदं महासिद्धान्तश्रुतप्रकाशिकायामिति । दूषणद्वयगर्भा प्रथमा कक्ष्येति । तत्रैव–तद्य इत्थं विदुरित्यत्र कार्याधिकरणदीपभाष्यश्रुतप्रकाशिकादिषु फलबलादुपास्याकारविशेषस्य साधिततया तद्बलेनापि तत्सिद्धेश्च । तत्र हि पञ्चाग्निविद्या ब्रह्मविषया ब्रह्मगमनफलकत्वात् इत्यनुमाने ब्रह्मगमनफलकत्वमस्तु ब्रह्मविषयत्वं मास्तु इत्यप्रयोजकशङ्कायां–तत्क्रतुन्याय एव ह्यनुकूलतर्कतया विवक्षितः । यदि तत्क्रतुन्यायः अयोगव्यवच्छेदमात्रपरः स्यात् तर्हि केवलजीवोपासकस्यापि ब्रह्मगमनसंभवात् तन्न्यायस्य तदप्रयोजकशङ्कावारकत्वायोगेन तदनुमानमनुपपन्नमेव स्यादिति तद्बलेन तस्य अन्ययोगव्यवच्छेदकतायाः आवश्यकत्वात् । एवमेक आत्मनः शरीरे भावादित्यधिकरणसिद्धान्तादपि तत्सिद्धिः द्रष्टव्येति दूषणद्वयगर्भा तृतीया कक्ष्या इत्याद्युक्तत्वात् तत्क्रतुन्यायस्य अयोगव्यवच्छेदार्थकत्वाङ्गीकारे अप्रतीकालंबनेति सूत्रभाष्यश्रुतप्रकाशिकादीपादिविरोधो दुरुद्धरः अतः यत्र यत्र फलात्मकज्ञानविषयकत्वं तत्र तत्र उपासनात्मकज्ञानविषयत्वमिति व्याप्तिः तत्क्रतुन्यायसिद्धा ॥

अत एव तद्य इत्थं विदुरिति पञ्चाग्निविद्यानिष्ठविषये ब्रह्मणः विशेषणतया वेदनमन्वेऽपि विशेष्यतया श्रद्धापूर्वकब्रह्मोपासनाभावात् आत्मानुभवकामस्य तस्य ब्रह्मप्राप्तिः न घटते। तद्य इत्थं विदुरित्यस्यार्थः – ये पञ्चाग्निविद्यानिष्ठाः तत् आत्मस्वरूपं इत्थं प्रकृतिविनिर्मुक्तं विदुः जानन्तीति। ये चेमेऽरण्ये श्रद्धा तप इत्युपासत इत्युक्तत्वात् श्रद्धापूर्वकमुपासीनस्य ब्रह्मविद्यानिष्ठस्य ब्रह्मप्राप्तिः घटते। ये चेमे इति श्रुत्यर्थः – इमे ये च ब्रह्मविद्यानिष्ठाः श्रद्धा श्रद्धापूर्वकं तपः ब्रह्म श्रद्धापूर्वकमुपासत इत्यर्थः। श्रद्धा नाम ब्रह्मैवावगन्तव्यम् नान्यदिति विश्वासः इति आत्मानुभवकामस्य तस्य अयथोपासनफलप्राप्तेः तत्क्रतुन्यायेन तत्फलमप्ययथाभूतम्। अतः सूत्रभाष्यश्रुतप्रकाशिकाद्यनुसारात् आत्मप्राप्तिकामानां ब्रह्मप्राप्तिः नास्तीति सिद्धान्तितं सङ्गच्छते। तथोक्तं रहस्यमञ्जर्यां – कैवल्यविषये कैश्चिदुक्तन्याभासैर्यदीरितम्। तन्मूलाज्ञानतिमिरं संप्रदायदिवाकरात्॥ नाशयामि यथान्यायं भाष्यादीनां यथाश्रुतम्। यः प्रकृत्या विनिर्मुक्तस्वरूपो नित्यनिर्मलः॥ तदवाप्तिर्हि कैवल्यं न सा प्रकृतिमण्डले। यतो विधूननं सूक्ष्मप्रकृतेर्हि सवासनम्॥ विरजासरसि स्नानात् ततः कैवल्यमश्नुते। विरजा परमव्योम्नोरिति पाद्मपुराणतः॥ कैवल्यस्थानकॢप्तिश्च यथा स्पष्टं समीरिता। सहस्रनामभाष्ये च मुक्तानां परमा गतिः इत्येतद्भाष्यसमये मुक्तानां प्राप्यनिर्णये श्रीपराशरभट्टार्यैः प्राह प्राचां महार्थवित्॥ संसारस्यापि परमपदस्य च यदन्तरं तद्देशं केवलैः प्राप्यं प्राप्यान्तरविरागतः। कैवल्यस्यापि मुक्तित्वं जरामरणमोक्षतः॥ उपपन्नमपुरुषोक्तिः न स्यात् स्वारस्यभङ्गतः। यं प्राप्य न निवर्तन्ते तद्धामेति स्मृतेः पुनः। तच्चाप्यपुनरावृत्तिलक्षणं त्विति च स्मृतेः। संसारहेतुसकलकर्मणां तत्क्षणक्षयात्। ब्रह्मप्राप्तिं प्रति सदा प्रतिबन्धकभावतः।

न ब्रह्मप्राप्तिसंसारौ जिज्ञासोस्तर्हि सेत्स्यतः । सर्वे च्यवनधर्माण इति स्मृत्या यदीरितम् ॥ कैवल्यस्याप्यनित्यत्वं कैश्चिदापातवेदिभिः । अत्यन्तपरिहास्यं तत् श्लोकतात्पर्यवेदिभिः ॥ ऐषामनन्यभोगत्वधर्मच्यवनमेव हि च्यवनार्थस्ततो नित्यं कैवल्यं मुक्तिरेव तत् ॥

अन्यथा फलनाशश्चेत् च्यवनार्थः स्मृतस्तदा । स्वार्थकैंकर्यभगवदनुभूत्योश्च्युतिस्समा । फलकामत्वरूपस्य हेतोः सर्वत्र तुल्यतः । नित्यानुभवकैंकर्यनित्ये यदि तदात्र च नित्यस्वात्मानुभूतिश्च नित्यानित्यश्रुतेस्तथा । ईश्वरानुभवस्वार्थकैंकर्यैश्वर्यकामिनाम् । जिज्ञासोरपि साम्येन वक्तव्यं च्यवनं तदा । स्वेष्टस्य फलनाशस्य सर्वस्यानुपपत्तितः ॥ युक्तस्यानन्यभोगत्वं च्यवनं सर्वसम्मतम् । यतस्सर्वात्मनामीश पारतन्त्र्यनिरूपकम् ॥ स्वार्थकैंकर्यसद्भावे प्रमाणं न च दृश्यते । इति केचित् वदन्त्यत्र ते न भाष्यार्थवेदिनः ॥ तत्क्रतुश्चेति सूत्रार्थे सम्यगाह हि भाष्यकृत् । अस्मिन् लोके यथोपायो भवति प्रथमं नरः ॥ अस्माल्लोकात्तथा प्रेत्य प्राप्नुते सदृशं फलम् । यथा यथोपासते तमिति श्रुत्या च तत्क्रतोः । न्यायस्सर्वत्र सर्वेषां संमतो हि यतस्ततः । तथा स्वाभिमतं प्राप्यं स्वीकारः स्वगतो यदि ॥ परेच्छाविषयं प्राप्यं स्वीकारश्चेत् परं गतिः । तदुपायरतानां च तत्कैंकर्यं फलं मतम् ॥ तदीयोपायनिष्ठानां तदीयावृत्तिरीरिता । प्राप्यप्रापकयोस्साम्यं तत्क्रतुन्यायनिश्चितम् ॥ पञ्चाग्निविद्यानिष्ठानां भाष्यादावर्चिरादिका । गतिः प्रकृतिनिर्मुक्तब्रह्मात्मकनिजाकृतेः ॥ प्राप्तिश्च भाष्यकारेण स्यादिति प्रतिपादनात् । मध्येऽर्चिरादेः पूर्वं वा स्वात्मप्राप्तिर्न विद्यते ॥ तस्मात् स्वानुभवान्ते च ब्रह्मप्राप्तिर्न सेत्स्यति ॥ अतः पञ्चाग्निविदुषः परप्राप्तिर्न विद्यते ॥ मधुविद्यानयात् पर्वक्रमेण ब्रह्म चाश्नुते । य इत्थमवदंस्तैर्न मधुविद्या निरूपिता ॥ मधु विद्या च सा नित्या नित्योपासात्मिका ततः । तत्र पर्वक्रमो युक्तस्त्वनित्य-

प्राप्तिपूर्वकम् ॥ नित्यप्राप्तेरयं न्यायो ज्ञानयोगेन विद्यते । नित्योपासनरूपत्वात्तत्पर्वक्रमदीर्घटी ॥ आत्मस्वरूपावाप्तीच्छुः प्रकृत्या रहितं यथा । जिज्ञासुरिति भाष्येसद्भाष्यकारोप्युवाच ह ॥ अत एव हि जिज्ञासोर्न परप्राप्तिकामना । नाना नृकामना लोके तत्तत्सुकृत भेदतः ॥ राज्यादैश्वर्यमल्पं स्यादनल्पं स्वर्गमस्थिरम् । नित्यं सावधिकैवल्यं त्याज्या राज्यादयस्त्वतः ॥ ब्रह्मप्राप्तिरनल्पा च स्थिरा चावधिवर्जिता । कैवल्यं सावधित्वेन त्याज्यमाहुर्मनीषिणः । निर्गता-वधिकत्वेन ब्रह्मप्राप्तिरपेक्षिता । कैवल्यस्याप्यनित्यत्वं कथयन्तीह केचन ॥ न तत्र भाष्यकारादि संप्रदायोथ युक्तयः । प्रमाणं वापि पश्यामः तदनित्यत्वसाधकम् ॥ संप्रदाय विरुद्धत्वात् प्रमाणाभावतोपि च । युक्त्यभावादनित्यत्वं कैवल्यस्य न सेत्स्यति ॥ सर्वकर्म-विनिर्मोक्षः केवलज्ञानिनोस्समः । अतोर्चिरादिगमनं मुक्तत्वादुभयोः श्रुतम् ॥ इति कैवल्यनित्यत्वं यदुक्तं तन्न युक्तिमत् । सर्वकर्म-क्षयस्स्याचेत्परप्राप्तिरनन्तरम् ॥ स्यादेव न स्वानुभवः केवलोल्प-रसस्त्वपि । सर्वकर्मक्षयो न स्याद्बद्ध एव हि केवलः ॥ नित्यत्वं-त्यज्यतां तस्य कैवल्यस्याथ वा पुनः । केवलस्य परप्राप्तिः कक्षी कार्याप्यनिच्छुभिः ॥

अत्यन्तापरिहार्या स्यात् पाशरज्जुरितस्ततः । ननु कर्मक्षया भावे कथमस्यार्चिरादिका ॥ इति चेदुच्यते तत्तु यथा स्यादर्चि-रादिका । प्रक्षिप्तोर्नगरं मध्येऽध्वगस्त्येव तरोरधः ॥ स्वापवत्स्वानु-भूतिश्च गतिमध्येऽथवा भवेत् । दक्षिणायनगन्तृणां चन्द्रसायुज्यव-त्पुनः ॥ पर्यवस्यन् स्वानुभवे परव्योमाधिरोहति । ब्रह्मकार्योपास-नान्ते परव्योमाधिरोहवत् ॥ अतोऽर्चिरादिगमनं केवलस्योपपद्यते । अतस्स्वानुभवस्थानं युक्तं प्रकृतिमण्डले ॥ युक्तं स्वानुभवान्ते च परव्योमाधिरोहणम् । तस्मादनित्यं कैवल्यं परप्राप्तिविरोधि च ॥

तदीशप्राप्तिपर्यन्ततात्पर्यात्तस्य नित्यता । यं प्राप्य न निवर्तन्ते तद्धामेत्यत्र नित्यता स्मृता च चातुर्मास्यादेरक्षयत्वोक्तितस्समा । स्वात्मानुभूतिरिति या किल मुक्तिरिति स्तुता ॥ स्वानुभूतेर्हि नित्यत्वं न हि मुख्यं विरोधतः । विगतेच्छाभयक्रोधो यथा मुक्त इतीर्यते ॥ तद्वदेवास्य मुक्तित्वं मुख्यत्वे दोषसंभवात् । तस्मादेव हि कैवल्यमनित्यमिति युज्यते ॥ इति चेदुच्यते तस्य मुक्तित्वं नित्यतादि च । तदेव पापमित्याहुः स्वोद्देश्यस्य विरोधि यत् ॥ स्वोद्देश्यस्य विरोधित्वाद्ब्रह्मावाप्तिप्रासिसाधनम् । पापमेव हि जिज्ञासोस्तदभावान्न तत्फले ॥ ब्रह्मानुभवसंसारौ भवतस्तदनिच्छया । न मुक्तस्यापि जिज्ञासोः ब्रह्मज्ञानं प्रकाशते । सर्वविशेष्यधियं ब्रह्म सङ्कोचयति तस्य हि ॥ उपासनानुगुणतो ददाति फलमुत्तमम् । इति श्रीपतिसङ्कल्पः सङ्कोचोऽत्र न हीतरः । तत्क्रतुन्यायसिद्धोऽयमर्थो भाष्यादिनिश्चितः ॥

ईश एव परव्योम्नि स्वप्राप्तिं प्रापयिष्यति । जिज्ञासोरिति चेत्तर्हि स्वार्थकैङ्कर्यकामिनाम् । गुणानुभवितॄणां च स्वार्थतां च निवर्तयेत् ॥ स्वानुभूतेर्विरोधित्वात्तान्निवर्तयतीति चेत् । तद्गुणानुभवे स्वार्थकैङ्कर्येऽपि समं विदुः ॥ न तद्विभूतिस्वामाव्यात् अहङ्कारो निवर्तते । ज्ञानिनस्तर्हि जिज्ञासोस्तन्न्यायेन निवर्तताम् ॥ दक्षिणायनगन्तॄणां सायुज्यं श्रुतमिन्दुना । कामनानुगुणप्राप्तिः ब्रह्मकायनिषेविणाम् । मध्ये स्वानुभवे तद्वन्न श्रुतिः स्मृतिरस्ति हि । अतो नगरगन्तॄणां मध्ये स्वार्थनिदर्शनम् । स्त्रीप्रायोक्तिसमं यस्मात् तद्धि केवलयौक्तिकम् ॥ कैवल्यस्य हि नित्यत्वं चातुर्मास्याक्षयोक्तिवत् । निर्वाह्यमिति यत्तूक्तं तद्यं प्राप्य विरोधि च ॥ नाशो न युक्त इत्यादि शठजिद्गुरुसूक्तितः । न संकोचो न दीर्घत्वं विनाशो वा न युज्यते ॥ तस्य कल्पशतेनापि न क्षयोपचयावपि ॥

S. 7.

आद्यगीतसहस्रे च सद्यः कैवल्यनित्यताम् ॥ परांकुशमुनिः प्राह साक्षात्कृतपरावरः । योगिनाममृतं स्थानमिति स्मृत्या च योगिनां अमृतं नित्यमित्येव तत्स्थानं प्रतिपद्यते । तथा तु केवलपदमनित्यमिति यत्पुनः ॥ उक्तं तदपहास्यं तद्ग्रन्थज्ञैरिति साहसम् । विगतेच्छा-भयक्रोधो यथा मुक्त इतीर्यते ॥ एवं केवलमुक्तत्वमुचितं त्विति ये-ऽवदन् । अबाधात्तद्वदत्रापि गौणत्वमतिसाहसम् ॥ जिज्ञासुर्लभते भक्तिमिति स्मृत्या यदीरितम् । क्रमाद्भवति जिज्ञासुः भक्त इत्य-विचारितम् ॥ रमणीयं भवत्येव पूर्वापर विरोधतः । आर्तशब्दो यथा तत्र त्वारोग्येच्छोर्हि वाचकः ॥ तथा तत्रत्य जिज्ञासुपदं केवलवाचि न । किन्तु देहातिरिक्तात्मस्वरूपेच्छुपरं यतः ॥ अतस्तत्रत्य जिज्ञासो-र्भक्तत्वप्राप्तितुल्यतः । श्री गीतासूक्त जिज्ञासुरपि भक्तो भवेदिति ॥ तद्दृष्टान्तबलेनाहुः ये ते पण्डितमानिनः । तत्तत्प्रकरणोक्तार्थतात्पर्य-ज्ञानदूरगाः ॥ अर्थप्रकरणाद्येर्हि त्वर्थभेदस्तु साध्यते । अज्ञात्वातः प्रकरणं तद्व्याख्यानं प्रकुर्वताम् ॥ प्रयासो व्यर्थतामेति पुष्पवच्चाव-केशिनः । अहंकारगृहीतानां अर्थज्ञानं न जायते ॥ मध्यस्थ दृष्ट्या ज्ञातव्यं तत्वं तत्वबुभुत्सुभिः । संप्रदायैकलभ्योर्थो युक्तिं नापेक्षते क्वचित् ॥ युक्तिसंसाधितोप्यर्थः संप्रदायमपेक्षते । संमता सैव या युक्तिः संप्रदायानुसारिणी ॥ युक्तिं प्रमाणीकुरुते लोके केवल-यौक्तिकः ॥

प्रमाणपरतन्त्रास्ते ये प्रमाणैक चक्षुषः ॥ ये संप्रदायैक दृशः गुर्वधीना हि ते मताः । संप्रदायानुविधया प्रमाणानां प्रमाणता ॥ प्रमाणसिद्धमप्यर्थमननुष्ठानदूषितम् । न कुर्मोपायमित्याह गोदापि स्वस्वसूक्तिषु ॥ इति । विस्तरस्तु पूर्वोदाहृत ग्रन्थकैवल्यदीपिका कैवल्यकारिका गुरुभावप्रकाशिका विपुलद्राविडाष्टश्लोकी व्याख्यानादौ द्रष्टव्यः ॥ सिद्धान्ते-यथावस्थित ब्रह्मविद्यायां ईश्वरेच्छा नियामिका

परार्थानुभव परार्थकैंकर्यपरविषये भक्तः—गुणानुभवनिष्ठः—भागवतः-वृत्तिनिष्ठः अयथावस्थित ब्रह्मविद्यायां स्वातन्त्र्यं नियामकं, तच्च-स्वार्थानुभव स्वार्थकैंकर्यपरविषये, यथावस्थितब्रह्मानुभवं प्रति यथावस्थितब्रह्मविद्या कारणं, विजातीयब्रह्मानुभवं प्रति विजातीय-ब्रह्मविद्या कारणं, इक्षुक्षीरगुडादीनां माधुर्ये महदन्तरम् । तथापि भेदं निर्वक्तुं ब्रह्मणापि न शक्यते ।। इति न्यायात् एतन्निर्वचनस्य दुर्निरूपणीयत्वेऽपि स्वासाधारणाकारविशेषोऽस्त्येव ।।

ननु मुक्त्यनन्तरं स्वार्थकैंकर्यपरार्थकैंकर्यादिफलभेदप्रतिपादन-मत्यन्तमसंगतम् । तत्प्रतिपादकप्रमाणस्य यत्र कुत्रचिदश्रुतदृष्ट-पूर्वत्वादिति चेन्न सूत्र श्रीभाष्यश्रुतप्रकाशिका तद्व्याख्यानगुरुभाव-प्रकाशिका श्रीवचनभूषणादिप्रमाणजाते तादृश अर्थप्रतिपादनस्य दृष्टचरत्वात् – तथाहि —

फलोपासनयोः प्रकारैक्ये प्रमाणं जिज्ञासाधिकरणभाष्ये फलोपासनयोः प्रकारैक्यं यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवतीति श्रुत्यैव सिद्धमिति । तत्र श्रुतप्रकाशिका—फलदशायां गुणप्राधान्यश्रवणात् उपासने गुणप्राधान्यं कथं सिध्यति इत्यत्राह—फलोपासनयोरिति । फलोपासनयोरुभयोरपि सगुणत्वं गुण-प्राधान्यं च तुल्यप्रकारमित्यर्थः । श्रुत्यैवेत्येवकारेण उक्तन्यायस्य पुरुषबुद्ध्युत्प्रेक्षानिरपेक्षं श्रुत्या कण्ठोक्तत्वमभिप्रेतमिति । फलो-पासनयोरनन्यविषयत्वे प्रमाणं, ईक्षतिकर्मव्यपदेशात्सः इति सूत्र-भाष्ये – तत्र ध्यायतीक्षतिशब्दावेकविषयौ ध्यानफलत्वादीक्षणस्य यथाक्रतुरस्मिन् लोके पुरुषः इति न्यायेन ध्यानविषयस्यैव प्राप्यत्वादिति । तत्र श्रुतप्रकाशिका—अत्र ध्यायतीति यथोपासन फलप्राप्तिन्यायात् ध्यायतिकर्मैव ईक्षतिकर्मेति । स्वार्थकैंकर्यपरार्थ-कैंकर्यादिप्रतिपादने प्रमाणम् । समिति कैवल्यव्यावृत्तिरिति श्रुत-

प्रकाशिकाव्याख्यान गुरुभावप्रकाशिकायाम् । स्वमिति कैवल्य-व्यावृत्तिरिति वाक्यव्याख्यानावसरे । भगवत्प्रीतिमात्र प्रधानो-द्देश्यकानुभवकैंकर्यं एव स्वरूपानुरूपे । स्वस्यापि नाहं तत इत्यनु-गृहीतरीत्या स्वप्रीति भगवत्प्रीत्युभय प्रधानोद्देश्यकानुभवकैंकर्ययोः नमःशब्दनिषिद्धत्वादिति तत्रैव स्वार्थभगवदनुभवतत्कैंकर्ये अपि अहंकारममकारगर्भत्वात् । किंकरस्य स्वतः प्राप्ते न भवतः इति रहस्य विवेकव्याख्यानावसरे स्वार्थेति—अहं करोमि फलार्थभगवत्प्रसाद-साधनम् । अहं करोमीति अध्यवसायोऽहंकारः । तादृशसाधनानुष्ठान प्रधानोद्देश्यफलभोगवानहमित्यध्यवसायो ममकारः इति विवेकः ॥

तद्गर्भत्वं तद्घटितस्वसामग्रीकत्वं किंकरस्य भगवत्प्रीतिमात्रो-द्देश्य शेषवृत्तिं इच्छत इस्येत्यर्थः ॥ स्वतः इति—पूर्ववत्स्वरूपानुरूपसाधनतः इत्यर्थः न भवतः इति—तथा च—पूर्वोक्तभगवत्संकल्पविशेषात्—मूलमंत्र मन्त्ररत्नादिप्रतिपन्नस्वरूप याथात्म्यानुगुण परार्थ भगवदनुभव-कैंकर्य लक्षणफलोत्पत्ति प्रतिबन्धः उपायान्तरनिष्ठ स्वप्रयोजनपरयोः संभवतीति भावः इति । श्रीमन्त्रार्थविस्तरकठिनपददीपिकायां दीपा-रोपणादिकैंकर्यங்களும் सारकल्कभेदத்தாலே द्विविधமாய் இருக்கும்.

साक्षाल्लक्ष्मीपतावेव कृतं कैंकर्यमञ्जसा । सारकल्कविभागेन द्विधा सद्भिरुदीर्यते ॥ कृतकृत्यस्य कैंकर्यं यदनन्यप्रयोजनम् । गुर्वादि-रक्षणार्थं वा तत्सारं परिचक्षते ॥ याः क्रियास्संप्रयुक्तास्युरेकान्तगत-बुद्धिभिः ताः क्रियाः शिरसा देवः प्रतिगृह्णाति वै स्वयम् । डम्भार्थं परपीडार्थं तन्निरोधार्थमेव च । प्रयोजनान्तरार्थं वा कैंकर्यं कल्क-मिष्यते ॥ तत्सर्वं देवदेवस्य चरणामुपतिष्ठते । इति ॥

श्रीकृष्णपादतनूजत्वकांचीपुरीश श्रीवरदराजापरावतारभूत श्री-लोकाचार्यप्रणीते भगवन्नियमनात्प्रवृत्ते संस्कृतद्राविडवेदमूल भाष्य-

श्रुतप्रकाशिकादिमारार्थंतत्त्वप्रकाशिके श्रीवचनभूषणदिव्यशास्त्रे அநுகூலராகிருர். ज्ञानभक्तिवैराग्यங்களிட்டு மாறிணப்போலே வடிவிலே; தொடை கொள்ளலாம்படி இருக்கும் பரமார்த்தர் प्रतिकूलராகிருர் देहात्माभिமானிகளும் स्वतन्त्रரும், अन्यशेषभूतரும், उपायान्तरनिष्ठரும், स्वप्रयोजनபரரும், उपायान्तरनिष्ठருக்கு உத்தேச்யன் देवतान्तर्யாமியான சர்வேச்வரன் उपायं कर्मज्ञानभक्तिகள். उपेयं भगवदनुभवம் । स्वप्रयोजन பரருக்கு उद्देश्यन् நெஞ்சிலுல் நினைப்பான் எவனென்கிறவன் उपायं स्वकीयस्वीकारं उपेयं स्वार्थकैंकर्यम् । முதல் சொன்ன மூவரும், நிக்ரஹத்துக்கிலக்கு மற்றையிருவரும் அனுக்ரஹத்துக்கிலக்கு इति ॥

प्रयोजयितृत्वं नाम नियन्तृत्वं-तच्च द्विविधं-शासन लक्षणं-तंत्रणलक्षणं चेति-तंत्रणलक्षणं नाम-स्वयमेव जीवकरणकळेबरादिष्वाविश्य कार्यकरणं। तच्च अर्थयितृत्वं-तत्प्रकृष्टदया विषयभूतभक्तिपारवश्यप्राप्त विषये-शासन लक्षणप्रयोजयितृत्वं शास्त्रवश्यविषये। तच्च शास्त्रं द्विविधं आज्ञाशास्त्रं अनुज्ञाशास्त्रं चेति। यावज्जीवमग्निहोत्रं जुहोतीत्याद्याज्ञाशास्त्रं परतंत्र शक्ताधिकारि विषयं ज्ञानाधिक्य प्रपन्नाधिकारि विषयमिति यावत् ॥

ईश्वरः शास्त्रमुखेन प्रयोजकः स्वर्गकामो यजेत-मुमुक्षुर्ब्रह्मोपासीतेत्यादिशास्त्रं अनुज्ञाशास्त्रं स्वतन्त्राधिकारिविषयं सः कर्ताफलभोक्ता च ईश्वरः तद्विषये अनुमन्ता शास्त्रफलं प्रयोक्तरि इत्युक्तत्वात् फलं अनुमन्तृगतं न कर्ता शास्त्रार्थवत्त्वात् इति सूत्रेण सामान्यतः कर्तृत्वं सिद्धान्तितं शास्त्रार्थवत्त्वात् अर्थवच्छास्त्रनियोज्यत्वादित्यर्थः ॥

परात्तु तच्छ्रुतेरिति सूत्रेण नियोज्यकर्तृत्वं निर्णीतं ॥ कृतप्रयत्नापेक्षस्त्वित्यनेन शास्त्रादि सार्थक्य सिद्ध्यर्थं तत्संकोचं कृत्वा

अधिकारि विषय व्यवस्था कृता। नियोज्य कर्तृत्वं सिद्धोपायनिष्ठ-स्वरूपानुरूपं कैवल्याधिकारी स्वार्थानुभव कैंकर्यकामी च यथा क्रतुन्यायात् अयथोपासनात् स्वार्थफलं भुंक्ते श्रीभाष्यकर्त्रधिकरणे यच्च प्रकृतेः क्रियमाणानीत्यादिना गुणानामेव कर्तृत्वं स्मर्यत इति। तत्र सांसारिक प्रवृत्तिष्वस्य कर्तृता सत्वरजस्तमोगुण संसर्गकृता न स्वरूपप्रयुक्तेति प्राप्ताप्राप्त विवेकेन गुणानामेव कर्तृतेत्युच्यत इति वाक्य व्याख्याने संसार दशायां प्रवृत्तिः सांसारिके प्रवृत्तिरिति श्रुतप्रकाशिकायामुक्तत्वात् संसारिणः स्वतंत्र कर्तृत्वं दुष्टं-तत्तुच्छमिति नियोज्यकर्तृत्वं युक्तमिति मत्वा உனக்கே யாக வெனைக் கொள்ளுமீதே क्रियतामिति मां वद इति शठारिगुरुलक्ष्मण प्रभृतयः अवोचन्॥

कर्ता शास्त्रार्थवत्वादिति सूत्रम्। आत्मनः कर्तृत्वाङ्गीकारेण भोक्तृत्वमात्रं वदतः सांख्यस्य मतनिरासे प्रवृत्तशास्त्राणां प्रमिति जननद्वारा प्रवर्तन लक्षण फलकत्वात् यजेत स्वर्गकामः मुमुक्षुर्ब्रह्मोपासीतेत्येवमादिशास्त्राणि तत्तत्फलभोक्तारं कर्तृत्वे नियुञ्जते। अतः स्वर्गकामना विद्यते चेत् याग कुर्यात्। मुमुक्षा विद्यते चेत् ब्रह्मोपासनं कुर्यात् इति वदन्ति। ब्रह्मानुभवरूपफलविषये स्वार्थत्वेन प्रवृत्तिः क्रियते चेत् तदा उपासनकर्ता, फलभोक्ता च अयमेव तदानीं ईश्वरस्य एतद्विषये अनुमन्तृत्वरूपनियन्तृत्वमेव न तु तन्त्रणरूप नियन्तृत्वम्॥

पूर्वमीमांसायां शास्त्रफलं प्रयोक्तरीति प्रयोक्तुरेव शास्त्रफल-गामित्वमुक्तम्—अतः इदं सूत्रं सर्वकर्तृत्वस्थापकमित्युच्यते चेत् कर्ता भोक्तृत्वादिति वक्तव्यं तत्र उत्तरसूत्रे आत्मनः स्वाभाविक नियोज्य-कर्तृत्वं स्थिरीकृतम्। सिद्धान्तयोजनायान्तु कर्ता शास्त्रार्थवत्वात्

शास्त्रफलं प्रयोक्तरीति सूत्रद्वये जीवस्यैव साधनानुष्ठातृत्वं फल-भोक्तृत्वं च साधितमिति न वक्तुं शक्यते ॥

तत्र शरणवरणाधिकारिणं प्रति भगवदीयसाधनानुष्ठान फलीभूतकृतिमत्त्वस्य भगवद्भोगोद्देशेनैव प्रवृत्तेः अवधातस्वेदवत् आनुषंगिक-भोक्तृत्वस्य च विवक्षितत्वात्। प्रकृति संसर्गकृत परमात्माधीन कर्तृता ज्ञानस्य प्रमितिरूपत्वेपि अदृष्टद्वारकयत्किंचित्फलोद्देश्यक साधनानुष्ठानार्हत्वलक्षण कर्तृत्वज्ञानस्य स्वप्रवृत्त्युद्देश्य भोगाश्रयत्वार्हत्वलक्षण-भोक्तृत्वज्ञानस्य च भ्रमरूपत्वस्य नमश्शब्दादिसिद्धत्वात् अस्य च भ्रमद्वयस्य अनाद्यचित्संबन्धनिबन्धन अहंकारममकारमूलत्वात् ॥

ईश्वरः निरंकुशस्वातन्त्र्यात् —द्विधा पुण्यपापौ निर्माय त्याज्योपादेयविभागप्रतिपादकशास्त्रं ददत् सन्—यः निन्दितं करोति— तं शिक्षयति। यः विहितं करोति तं परिपालयति। तद्वत् अनन्तरं निष्कृष्टाधिकारिणः विषये शेषत्वपारतन्त्र्यादिस्वरूपशोधक मूलमन्त्रादि-प्रवचनमकृतशेषत्वन्नाम। परगतातिशयाधायकत्वे सति स्वातिशया-नाधायकत्वं। अत्र परपदं शेषत्वेनाभिमतवस्तुव्यतिरिक्तशेषिपरं—शेषिणि कृपादियुक्ते राज्ञि अतिव्याप्तिवारणाय स्वातिशयानाधायकत्व-दळं—भृत्यातिशयस्यापि स्वातिशयान्तर्गतत्वेन, स्वातिशयानाधायकत्वं नास्ति। अतः अवधारणघटितमेव शेषत्वलक्षणमावश्यकं परगतातिशयाधानेच्छया उपादेयत्वमेव यस्य स्वरूपं सः शेषः परः शेषी इति हि वेदार्थसंग्रहेऽनुगृहीतम् ॥

पारतन्त्र्यं नाम भोगमोक्षसाधनगोचरकृत्यनर्हत्वं मूलमन्त्रः पदत्रयेण क्रमेण—अनन्यार्हशेषत्व अनन्यशरणत्व अनन्यभोग्यत्वरूप-स्वस्वरूपयाथात्म्यत्रयं अनन्यनिरपेक्षं ऐदंपर्येण प्रतिपादयति—अनन्यार्हशेषत्वन्नाम भगवन्मुखोल्लासमात्रोद्देश्यकप्रवृत्त्यर्हत्वं अनन्यशरणत्व-

नाम भगवत्प्रसादद्वारक फलसाधनगोचरप्रवृत्त्यनर्हत्वं ।। अनन्यभोग्यत्व-नाम – स्वप्रवृत्त्युद्देश्यभोगवत्त्वानर्हत्वम् । स्वप्रवृत्त्युद्देश्य भोगवत्त्वा-नर्हत्व नाम स्वप्रवृत्त्युद्देश्यभोगानर्हत्वम् ।।

प्रवृत्त्यभावेऽपि भोगस्योद्देश्यत्वं स्यान्नामेति चेत्, भगव-द्भोगस्य स्वप्रयोजनत्वेन उद्देश्यत्वन्नास्ति इति च प्रवृत्तिश्च पारतन्त्र्य-स्वरूपविरुद्धा इति च सूचयितुं स्वप्रवृत्त्युद्देश्यभोगवत्त्वानर्हत्व-मित्युक्तं–अतः भगवन्मुखोल्लासमात्रोद्देश्यकप्रवृत्त्यर्हमित्यपुनरुक्तिः । इयं सिद्धोपाययाथात्म्यं अन्यनिरपेक्षमैदंपर्येण प्रतिपादयति ।।

सिद्धोपाययाथात्म्यन्नाम – निरपेक्षपुरुषकारभावविशिष्टलक्ष्मी-विशिष्टस्य गुणविग्रहविशेषविशिष्टस्य भगवतः चेतनप्रवृत्तिसामान्य-निरपेक्षस्वप्रसादद्वारककैङ्कर्यपर्यन्तमोक्षकारणत्वरूपं । कैङ्कर्यन्नाम शेषत्वो-पधायकभोग्यप्रार्थनीयपरप्रयोजनप्रवृत्तिरूपत्वं चरमश्लोकः–महाफल-विशेषभूताप्रतिषेधादिकपरमपुरुषार्थलक्षणकैङ्कर्यपर्यन्तमोक्षात्मकं तत् प्रतिबंधकविमोचनान्तमध्यगतफलपरंपरां केवलभगवदभिमततया भगव-त्प्रयोजनमिति प्रदर्श्य पुरुषार्थयाथात्म्यं प्रतिपादयति ।।

पुरुषार्थयाथात्म्यन्नाम स्वयंप्रयोजनभगवन्मुखोल्लासमात्रोद्देश्य-कशेषवृत्तित्वं । विस्तरस्तु – श्रीमन्त्रार्थकठिनपददीपिका चरमश्लोक-संगतिग्रन्थादौ द्रष्टव्यः – मूलमन्त्रमन्त्ररत्नचरमश्लोकशोधितः स्वरूपः चेतनः निर्ममतया परार्थानुभवपरार्थकैङ्कर्यप्रवृत्तश्चेत् तस्य ईश्वरः परमफलं स्वं ददाति यथोपासनत्वात् । श्रीभाष्ये– प्राप्ताप्राप्तविवेके-नेति कर्तृता स्वरूपप्रयुक्तेत्युक्तत्वात् । स्वरूपानुरूपकर्तृत्वं नियोज्य कर्तृत्वमिति फलितम् ।।

प्रपत्तौ मोक्षसाधनत्वज्ञानेन प्रवृत्तश्चेत्, स्वतन्त्रकर्तृत्वमायातं– मुमुक्षुः ब्रह्मोपासीतेति मोक्षकामनाप्रदर्शनात् शास्त्रफलं प्रयोक्तरीति-

न्यायेन कर्तृत्वफलभोक्तृत्वे चेतनगते चेत्, तदा ईश्वरः अनुमंता, मूलमन्त्रादिशिक्षितस्वरूपः चेतनः नियोज्य एव अहं भगवदुक्तं कुर्वे इति प्रवृत्तश्चेत् ईश्वरः स्वयमेव फलं भूत्वा निरतिशयप्रीतो भवति ईश्वरेण प्राप्ताप्राप्तविवेकार्थं हि मूलमन्त्रादिप्रवचनं कृतं—अतः स्वतन्त्र-कर्तृकोपासनादिषु चक्षुःप्रदाय ।सद्गोपायनिष्ठस्सन् तन्नियमितं करोति चेत् तद्विषये ईश्वर एव कर्ता भोक्ता प्रयोजकश्च, अनुमन्ता न ॥

अत्र परायत्ताधिकरणश्रुतप्रकाशिका श्रीवचनभूषणमीमांसायां प्राप्ताவும் प्राप-கனும் प्राप्ति-க்குகப்பானும அவனே इति च प्रमाणं। परायत्ताधिकरण श्रुतप्रकाशिकायां प्रथमप्रवृत्तस्य अनुमन्तृत्ववत् अत्यन्तानुकूलप्रतिकूलयोः प्रयोजयितृत्वमपि फलदानकल्पं इत्यत्र द्वेधा योजना—अनुकूलप्रतिकूलशब्दौ केवलं पुण्यपापकृत्परौ चेत्, तदुभयविषये अप्रवृत्तप्रवर्तनरूपप्रयोजककर्तृत्ववान् ईश्वरः। योजना-न्तरे पुण्यस्य सुकृतदुष्कृते धूनुते पुण्यपापे विधूय उदस्य निरोधि-पापं इत्याद्युक्तरीत्या प्रतिकूलशब्दवाच्यत्वे तत्कर्तृविषये ईश्वरस्य प्रातिकूल्यव्यवसायित्वात् । तादृशप्रयोजकत्वं प्रातिकूल्यव्यवसाय-फलदानकल्पं भवति। अत्यन्तपरतन्त्रस्य अनुकूलशब्दवाच्यत्वे ईश्वरस्य प्रथमत एव चेतने तादृश पारतन्त्र्यज्ञानोद्बोधने प्रवृत्तत्वात् ईश्वरस्य इष्टतमत्वात् ईश्वरः तद्विषये प्रयोजकः। तादृशप्रयोजकत्वं च अत्यन्तपारतन्त्र्यव्यवसायफलदानकल्पं न मुख्यत्वात् अतः कल्पशब्दः ईषन्न्यूनार्थे कल्पप्रत्ययः। फलदानतुल्यमित्यनुक्त्वा फलदानकल्पमिति प्रयोगात् तत्तदधिकारानुगुण्येन योजनाद्वयं अभिमतमिति सूचितम् ॥

वरवरमुनिगुरुवर्यैः ततोपेक्ष्य ततोऽनुमत्येति श्लोके अन्वय-प्रदर्शनपूर्वकं उदासीन-ைப்போல் इति प्रत्यपादि तादृशाधिकारिणः तत्पूर्वमेव कृपाविषयत्वात् एतत्कृताज्ञाशास्त्रानुष्ठानस्य कैङ्कर्यरूपत्वं।

नत्वनुज्ञा शास्त्रानुष्ठानस्य परार्थप्रपन्नैः प्राप्यं जीवः, प्राप्ता ईश्वरः। स्वीकारमप्यनपेक्ष्य भगवानुपायः। फलं परार्थानुभवादिशब्दादि- भोगप्रभृति स्वप्रयोजनपर्यन्तं विरोधि इति अर्थपञ्चकयाथात्म्यं अनुसन्धेयम् तत्वत्रयव्याख्याने ॥

परात्तु तच्छ्रुतेरित्यत्र प्रयोज्यकर्तृत्वं सिद्धान्तितम्। ननु कर्तृत्व- सामान्यनिषेधः सिद्धान्तितः। अत्र प्रधानकर्तृत्वं नास्तीत्युच्यते। रहस्य पूर्वपक्षे स्वातन्त्र्ये सति अमात्यपारतन्त्र्यवत् पराधीनकर्तृत्व- मङ्गीकृतम्। तत्पराधीनकर्तृत्वं स्वातन्त्र्यसहत्वात् अचिद्वत्पार- तन्त्र्यस्वरूपविरुद्धं। अचिद्वत्पारतन्त्र्यन्नाम अचिद्वत् स्वरूपोपाय पुरुषार्थेषु निवृत्तममकारत्वं प्रयोज्यकर्तृत्वं स्वाभाविकं अचिद्व- त्पारतन्त्र्यस्वरूपानुरूपं साधनभूतकर्मज्ञानभक्तिप्रपत्तिदेशवासनामसंकी- र्तनादिः प्रधानकर्तृत्वायत्ता जिज्ञासाधिकरणभाष्ये ज्ञानप्रसरे तु कर्तृत्वमस्त्येव। तच्च न स्वाभाविकं अपि तु कर्मकृतमित्यविक्रिय- स्वरूप एवात्मेत्यनुगृहीतत्वात् ॥

श्रीवचनभूषणदिव्यशास्त्रे द्वितीयप्रकरणे वेदान्तங்களுபாயமாக விதிக்கிறபடி யென்னென்னில் ஔஷத ஸேவை பண்ணுமவர்களுக்கு அபிமதவஸ்துக்களிலே அத்தைக் கலசியிடுவாரைப்போலே, ஈச்வரனைக் கலந்து விதிக்கிறத்தனை इत्याद्यनुगृहीतत्वात् उपायान्तरस्य अभिमतवस्तुस्थानीयत्वं निरुपाधिकसिद्धोपायस्य रोगनिवर्तकौषधस्थानीयत्वं च प्रतीयते। अतः कर्मादीनामुपायत्वमेव नास्ति। आपातप्रतीत्या उपायत्वम्। अभिमत वस्तुनः औषधसंमिश्रत्वेन रोगनिवर्तनोपायत्वज्ञानवत्। औषधस्यैव रोगनिवर्तकत्वात्तन्न वास्तवम् ॥

श्येनेनाभिचरन् यजेत, स्वर्गकामो यजेत कर्मणैव हि संसिद्धिं ज्ञानभक्तिसमन्वितम् कर्मेत्यादिना कर्मादीनामुपायत्वेन

वेदविधिस्तु तत्तद्रुचिजनकत्वमपेक्ष्य प्रवृत्ता। अतः साधनभक्तिनिष्ठ-साधनप्रपत्तिनिष्ठान् प्रति स्वार्थानुभव-स्वार्थकैंकर्यरूपफलप्रदानांशे भगवतः अयथावस्थितस्वार्थत्वांशवैषम्यस्य ஈச்வரன் உபாய மாஞல் ப்ரபத்தி உபாயமன்று भक्ति உபாயமாஞல் ஈச்வரன் உபாயமன்று इति षट्सहस्रिकाव्याख्योक्तरीत्या सिद्धतया कर्मादीनामपि भ्रान्त्या उपायत्वेन ग्रहणात्। तादृशोपाधिना भगवतः उपायत्वमौपाधिकः कर्मादीनामुपायत्वं चेतनबुध्यारोपितम्। न तु वास्तवमित्यनुगृहीतम्॥

रहस्यत्रयमीमांसाभाष्ये—प्रथमाध्यायप्रथमपादचतुर्दशाधिकरणे, न चैवमपि प्रपन्नत्वे फलभेदो न स्यादिति वाच्यम्। प्रथममेव मूलमन्त्रेण स्वरूपयाथात्म्यज्ञानपूर्वकं मन्त्ररत्नचरमश्लोकार्थानुसन्धानेन साधनान्तरपरित्यागपूर्वकं उत्तरवाक्यप्रतिपन्नकैङ्कर्याभिरुच्या पुरुषकारवरणपूर्वकं सिद्धोपायस्वीकाराभावेन तत्त्वज्ञानदशायां भगवदेकोपायत्वाध्यवसाये सत्यपि कर्म-ங் கைங்கர்யத்திலே புகுமி त्याद्यनुगृहीतरीत्या प्रारब्धकर्मयोगाद्यनुवृत्तिसद्भावेन च साधनान्तरनिष्ठानां कर्मयोगादेरेव मुक्तिव्याजतया फलभेदोपपत्तेः॥

இவைத்தை தர்மமென்கிறது. பிரமித்த அர்ஜுனன் கருத்தாலே, வேதபுருஷன் உபாயாந்தரங்களை விதித்தது. ஒரு பலத்துக்கரிய வழியும் எளிய வழியு மித்யாதி. निष्कर्षकरहस्यत्रयमीमांसासूक्तिषु வேதாந்தங்களி லித்தை உபாயமாக விதிக்கிறபடி யென்னென்னிலித் யாதி निष्कर्षक श्रीवचनभूषणमीमांसासूक्तिषु च साधनान्तरमेव नास्तीति सिद्धान्तितत्वेन உபயாந்தரநிஷ்டர்க்கு உத் தேசய்யனி-त्यादिसूक्तौ स्वप्रयोजन-பரர்க்குத்தேசய்யனி-त्यादिसूक्तौ च नैयायिकस्य वायुरप्रत्यक्षः, यस्यामतं तस्य मतमित्यादाविव मतत्वद्वारकसंबन्धष्ष्ठ्यर्थः इति वक्तव्यत्वेन तत्सूक्तिविरोधाभावाच्च।

एतेन प्रकारान्तरं அஜ்ஞர்க்கு உபாயம் ज्ञानि-களுக்கபாய मित्यादि सूक्तव्यवस्थाता। प्रपत्तिव्याजव्यतिरिक्तव्याजरूपं कर्मयोगादिकं अज्ञैरदृष्टद्वारकमोक्षकारणरूपोपायत्वेन ज्ञायते । ज्ञानिभिस्तु तादृशोपायत्वेन अज्ञायमानं तद्रक्षणप्रवृत्तिविरोधित्वेन निषिद्धरूपोपायत्वेन ज्ञायते इत्यर्थः। इति। श्रीलोकाचार्यमुनिप्रणीत திருமந்திரார்த்த கடினபத தீபிகாயாம்—सृष्ट्यादि முகத்தாலே பண்ணின கிருஷிபலமென்கிற வாகாரங்களானவை. உபாயாந்தரங்களான, भक्त्यादि-களுக்கு மோக்ஷமே யாகிலும் உபாயாந்தர நிஷ்டனுக்கு ஸ்ருஷ்ட்யாதிகளில் यौगपद्य மனுக்ரஹகார்யமென்கிற ப்ரதிபத்தியன்றிக்கே, ஸுக்ருதமூலமென்கிற ப்ரதிபத்தியே நடக்குகையாலே, भक्त्या-திகளுக்குமிவ்வாகாரம் ஒக்குமென்ன வொண்ணாதென்று தாத்பர்யம் इति ॥

திருமந்திரார்த்த कठिनपददीपिकायां चरमश्लोकप्रकरणे ஸாதனமாக வென்னது साधनत्वेन என்னபடி. இவன் ஸாதனமென்று நினைப்பிடாதபோது, அவையஸாதனங்களாயே யிருப்பன. ஆகையாலே, ஸாதனமாக வென்னாளிச் செய்கிறார். இத்தால் இவைத்துக்கு அஸாதனத்வமே நிலைநின்ற வாகாரம். साधनत्वं चेतनबुद्ध्या வந்ததென்றாயிற்று. ஆனால் வேதபுருஷன் விதிப்பானென்னென்னில் சாஸ்திர விச்வாசத்துக்காக श्येनयाग-த்தை விதித்தாப்போலே, स्वरूपविश्वास-த்துக்காக स्वयत्न-த்தாலே பல சித்தி யென்றிருக்குமிச்சேதனன். புத்தியாலே பக்தியை ஸாதனமாக விதித்தான் इति ॥

ब्राह्मण्यविशिष्टशरीरविषयकज्ञानं कर्मणि अधिकारः। शरीरात्मभ्रमस्य विरोधित्वन्नास्तीति रहस्यपूर्वपक्षे देहात्मभ्रमः कर्मणि अधिकारः इति सिद्धान्ते। श्रुतप्रकाशिकायां देवोऽहं मनुष्योऽहमिति ज्ञानं करिष्य इत्यत्र भासत इत्युक्तम् । देवपिण्डत्वप्रकारकाहंशब्दार्थ-

विशेष्यकज्ञानमात्मनीति देहात्मभ्रमोपपत्तिः। प्रधानकर्तृत्वे साधने प्रवृत्तिः देहात्मभ्रममूलका। तथैवानुगृहीतम् श्रीरहस्यत्रयमीमांसाभाष्यसिद्धाञ्जने। अत्रापि प्रपन्नजनकूटस्थानां पराङ्कुशादीनां अपरोक्षविवेकशालित्वात् अपरोक्षभ्रमाधिकारकं भक्त्यादिकं तेषां स्वरूपविरुद्धमेवेत्यभिप्रायो द्रष्टव्यः। एतत्सर्वमभिसन्धायानुगृहीतम् श्रीवचनभूषणमीमांसा भाष्ये तत्रैवाधिकारे वरददेशिकैः साधनानुष्ठानमात्रं देहात्मभ्रमकार्यम्। तच्च श्रीविष्णुपुराणेऽभिहितम् – अधिकारबोधयुक्तेषु विद्यते भावभावना। अक्षीणेषु समस्तेषु विशेषज्ञानकर्मसु॥ इति॥

अत्र श्रीविष्णुचित्तार्याः संसारिष्वेव हिरण्यगर्भादिषु भावनात्रयान्वयः इत्याह – अधिकारबोधयुक्तेष्विति श्लोकेन मत्फलसाधनत्वान्मदर्थमिदंकर्मेत्यधिकारबोधस्वरूपम्। अधिकारबोधस्यापि अधिकारमाह अक्षीणेष्विति। विशेषज्ञानं देवादिभेदभिन्नापरोक्षात्मकभ्रमः यावद्भ्रमानुवृत्तिः तावदधिकारबोधः तेषु शास्त्रवश्यत्वमिति। कर्मानुष्ठानमुभयानुष्ठानं च प्रवर्तते। देवमनुष्याद्यात्मानुसन्धानरूपं मानसवाचिकादि प्रवर्तत इत्यर्थः इति। तस्मादुपासनानुष्ठानस्य साधनप्रपत्त्यनुष्ठानस्य च देहात्मभ्रममूलकत्वात् स्वरूपविरुद्धत्वं न च वर्णाश्रमधर्माणामप्यननुष्ठानं प्रसज्यते। तेषां कैङ्कर्यत्वेनानुष्ठेयतया भ्रममूलकत्वासंभवादिति॥

अत्र तावत् साधनानुष्ठानमात्रमित्यत्र साधनशब्दो भोगमोक्षसाधनपरः। मात्रपदं कात्स्न्र्यपरं देहात्मभ्रमशब्देनापरोक्षभ्रमो विवक्षितः। उदाहृतश्लोके विवक्षितार्थस्यास्फुटत्वात्तद्व्याख्यानं दर्शयति – अत्रेति श्लोके विशेष्यं स्फुटयति संसारिष्वेवेति। श्लोके छान्दसो वर्णातिरेकः फलकामनाफलसाधनानुष्ठानफलभोगाधिकारः इति हि प्रसिद्धिः। अतस्तदनुसन्धानमधिकारिबोध इत्याह– यदिति।

यदिदमार्त्विज्यं तदपि मदर्थं मत्फलसाधनत्वात् अतो मत्कर्तृक-मित्यर्थः ॥

अत्र स्वप्रवृत्त्युद्देश्य फलाश्रयत्वलक्षणभोक्तृत्वानुसन्धानं भोग-मोक्षसाधनानुष्ठातृत्वलक्षणस्वतन्त्रकर्तृत्वानुसन्धानं च स्पष्टं। विशेष-ज्ञानकर्मस्वक्षीणेषु सत्सु ये अधिकारबोधयुक्ताः तेषु भावभावना विद्यते इत्यन्वयमभिप्रेत्य उत्तरार्धप्रयोजनमाह —अधिकारबोधस्यापीति। "जानीहि विज्ञानविजृम्भितानी" त्यत्र देवादिरूपेणात्मानुसन्धानं विज्ञानशब्दार्थः। विभेदजनके ज्ञाने इत्यत्र देवादिभेदो विभेद-शब्दार्थः। देवादिभेदेऽपध्वस्त इत्यत्र देवादिरूपो भेदः इत्यादि भाष्योक्तमभिसन्धायाह—विशेषज्ञानमिति देवादिभेदप्रकारकं ज्ञान-मित्यर्थः। तादात्म्यारोपे आरोप्यस्य प्रकारत्वादिति भावः। देवादीति देवादिभिः भेदैः प्रकारैर्भिन्नः अपरोक्ष आत्मभ्रम इत्यर्थः। अर्थैनैवेति न्यायादिति भावः। अपरोक्षपदेन यौक्तिकभ्रमव्यावृत्तिः। विशेषज्ञानेषु तद्धेतुभूतकर्मसु च अक्षीणेष्वित्यर्थ इति भावः ॥

अधिकारबोधस्य भावनाहेतुत्ववचनानुग्राहकन्यायमाह—तेष्विति 'स्वर्गकामो यजेत' 'मुमुक्षुर्ब्रह्मोपासीत' इत्यादौ कर्तृत्वभोक्तृत्वयोः प्रतीत्या अधिकारबोधाभावे शास्त्रवश्यत्वं न स्यात्। ततश्च विध्य-धीनमनुष्ठानं नोपपद्यत इति भावः। देहात्मभ्रमस्याधिकारबोधहेतुत्वे वचनानुग्राहकान्वयव्यतिरेकानुरूपन्यायः पूर्वोक्तोऽत्राभिप्रेतः। कर्मानु-ष्ठानं उपासनानुष्ठानमित्यनेन भावभावनेत्यत्र यजेत उपासीत इत्यादिधात्वर्थो भावः। तस्यानुष्ठानं भावनेत्यर्थः उक्तो भवति प्रवर्तते भवतीत्यर्थः। भावनात्रयान्वयव्यवस्थायामपि विशेषज्ञानमेव हेतुरित्याह—देवमनुष्यादीति तस्मादिति साधनानुष्ठानमात्रं देहात्म-भ्रमकार्यमिति श्रीविष्णुपुराणे अभिहितत्वादित्यर्थः ॥

न्यायतौल्यादाह – साधनप्रपत्तीति । स्वरूपविरुद्धत्वमिति स्वरूपपदं अपरोक्षदेहात्मकविवेकशालिस्वरूपपरं तस्य परोक्षदेहात्मविवेकशालिषु वर्णभेदभिन्नेषु दिव्यसूरिषु वर्णाश्रमधर्मानुष्ठाननियमदर्शनं नोपपद्यत इत्याशङ्क्य परिहरति – न चेति। कैङ्कर्यविधायकशास्त्राणां केवलपरार्थत्वेनैव तद्विधायकत्वादधिकारबोधाभावेऽपि तत्र विध्यधीनानुष्ठानमुपपद्यत इत्यभिप्रायेणाह–तेषामिति। अधिकारबोधपूर्वकमनुष्ठेयत्वे कैङ्कर्यत्वमेव भज्येतेत्यभिप्रायेण भ्रममूलकत्वासंभवादित्युक्तमिति दिगिति। तत्रैव परगतातिशयाधानेच्छाजन्योपादेयत्वरूपशेषत्वं पराधीनकर्तृत्वरूपपारतन्त्र्यं च साधनभक्त्यादावधिकार इति श्रीवचनभूषणमीमांसाभाष्ये–भक्तेः उपायत्वे दशविधविरोधादिसंभवाधिकारे ॥

यदप्युक्तं–पराशराद्यनुष्ठितत्वादुपासनस्याशिष्टपरिग्रहो नास्तीति तन्न, ततोऽप्यतिशयितज्ञानादिभिर्नाथयामुनयतिवरादिभिरननुष्ठितत्वेन शिष्टाचारविरोधोऽस्त्येव। श्रीपराशरादेः शास्त्राचार्यत्वेऽपि साराचार्यत्वाभावात्। तन्नमस्कारस्तूपकारकत्वकृतः ॥

यदप्युक्तं–कलौ कृतयुगं तस्येति न्यायात् कलावपि स्वयंप्रयोजनत्वेन तन्निष्ठानां पूर्वाचार्याणां सत्वान्न कालविरोधः इति, तन्न, कलियुगे साध्यभक्तेः सर्वाधिकारायाः परांकुशादिसंप्रदायप्राप्तायाः सत्वेऽपि साधनभक्तेः साधनप्रपत्तेश्च संप्रदायस्य विच्छिन्नतया अस्मिन्काले तदनुष्ठानायोगात्। नहि लक्ष्मीनाथमारभ्य साध्यप्रपत्तिसाध्यभक्त्योरिव चतुर्मुखमारभ्य साधनप्रपत्तिसाधनभक्त्योर्गुरुपरंपराप्राप्तत्वमवगम्यत इति तत्रैव भक्तेर्गौणमोक्षसाधनत्वनिषेधाधिकारे संग्रहश्लोकः॥

भक्तियोगाद्युपायः स्यात् ज्ञानिनां तु विरोधतः। तत्तत्सुकृतमूलत्वाद्देहाद्युपाधिसंभवात् ॥ सांसारिकप्रवृत्तित्वाद्देहात्मभ्रममूलतः ।

देवतान्तरसंसर्गादप्राप्तत्वादसंभवात् । तथा प्राप्तिविरुद्धत्वादाचार्यैरपरिग्रहात् ॥ कालधर्मान्तराहित्यान्निषिद्धत्वादपायवत् । तत्वदृग्भिरुक्तेश्च भयशोकनिदानतः । अभियुक्तस्य वचनादपायः साधनान्तरम् ॥ भक्तिस्तु व्याजमात्रं स्यादङ्गेष्वफलसाम्यतः । नायन्नास्त्यकृतो नेति श्रुत्योपायनिषेधनः । नवा व्याजत्वमप्यस्य एष एवेति च श्रुतेः । ईश्वरेणैव दत्तत्वात्फलत्वाच्चैव निन्दनात् ॥ पितुर्गोदानतुल्यत्वादुपायत्वेऽपि वा भवेत् । अभिचारेण तुल्यत्वादुपायत्वेऽपि वा भवेत् । अभिचारेण तुल्यत्वान्निषेधाच्च विधानतः ॥ तत्वं स्वरूपमस्यास्तु प्रपत्तावधिकारता । दुष्करत्वेन शोकः स्याद्व्रजेन्द्रस्येव सर्वतः ॥ इतीति ॥

साध्यभक्तिनिष्ठसाध्यप्रपत्तिनिष्ठान्प्रति परार्थानुभवपरार्थकैङ्कर्यविषये उपायत्वेन ग्रहणात् श्रीरिति धर्मिग्राहकप्रमाणसिद्धनिरुपाधिकपुरुषकारत्वविशिष्टश्रियः श्रियः भगवत एवोपायत्वं उपायोपेयत्वे तदिह तत्वं नतु गुणाविति श्रीभट्टारकगुरुश्रीसूक्तिरीत्या स्वाभाविकम् । अत्र द्वये शरणशब्दार्थस्य उपायत्वस्य उत्पत्तिशिष्टगुणावरोधन्यायेन चरणशब्दार्थे अन्वयात् विशेषणभूतायां श्रियि अनन्वयो द्रष्टव्यः ॥

उत्पत्तिशिष्टगुणावरोधन्यायस्तु—तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमित्यत्र सा वैश्वदेवीति वाक्येन विश्वेदेवदेवतामिक्षाद्रव्यसंबन्धानुमितो यागो विधीयते । वाजिभ्यो वाजिनमित्यत्रापि वाजिदेवत्यवाजिनद्रव्यककर्मान्तरं विधीयते नतु पूर्वविहिते वैश्वदेवयागे वाजिनद्रव्यरूपो गुणो विधीयते । पूर्वं यागस्य आमिक्षागुणावरुद्धत्वेन तत्र वाजिनस्य निवेशायोगात् इति । उत्पत्तौ वैश्वदेवयागोत्पत्तिवाक्ये, शिष्टः विहितः गुणः आमिक्षा रूपः गुणः, तदवरोधः तत्र इत्यर्थः ॥

श्रियः पत्नीत्वशेषत्वाणुत्वादिकं स्वतस्सिद्धं असाधारणोपायत्वासाधारणोपेयत्वविभुत्वेश्वरत्वादिकं नास्तीति मन्तव्यम्। श्रियः तादृशोपायत्वोपेयत्वाभावः श्रीभाष्यस्य साध्यभक्तिप्रतिपादकत्वसमर्थनप्रकाशे वक्ष्यते ॥

ननु श्रियः भगवद्वत् ईश्वरत्वविभुत्वादिकं अङ्गीकार्यं श्रीतत्त्वसिद्धाञ्जन श्रीविभुत्वसमर्थनादौ ईश्वरत्वविभुत्वादीनां स्थापितत्वादिति मैवं शङ्किष्ठाः। तद्ग्रन्थादौ पत्नीत्वानुगुणेश्वरत्वं धर्मभूतज्ञानकालसदृशविभुत्वं च अन्ततो गत्वाङ्गीकृतमित्यवेहि। तथाहि – श्रीतत्त्वसिद्धाञ्जने–सृष्टिस्थितीत्यारभ्य नातिव्याप्तिदोषश्चेत्यन्तेन, तत्र जगज्जनकत्वेत्यारभ्य अनर्हत्वादित्यन्तेन, प्राप्यत्वमत्रेत्यारभ्य नोक्तशङ्कावकाशः इत्यन्तेन, स्त्रीत्व, पत्नीत्वपतिपारार्थ्यादिभिरित्यारभ्य युज्यते इत्यन्तेन वाक्येन च क्रमेण ब्रह्मलक्षण, जगत्कारणत्वप्रयुक्तकृत्स्नव्यापारकर्तृत्व परमप्राप्यत्व निग्रहकर्तृत्व तत्तत्फलोपधानाद्यनङ्गीकारस्य, पुरुषकारत्वशेषत्वादेरङ्गीकारस्य, च स्फुटतरं प्रतिपादनात् ॥

श्रीविभुत्वसमर्थनग्रन्थे – न चैवमनन्योपायत्वहानिः। तस्याः उपेयत्वे अनन्योपेयत्वानुपपत्त्यापत्त्या विशेषणत्वेन परिहारस्य तुल्यत्वादित्यनेन लक्ष्म्याः अप्रधानोपायत्वाप्रधानोपेयत्वप्रतिपादनात्। तत्र तत्र पर्यवसानेऽन्यपरत्वाच्च। श्रियः ईश्वरत्व विभुत्वाद्यभावः श्रीतत्त्वसुधान्यायमन्दरादौ प्रपञ्चितः। तथाहि–श्रीतत्त्वसुधान्यायमन्दरे ईश्वरस्सर्वभूतानां, ईश्वरीं सर्वभूतानां इत्यत्रत्ययोः सर्वशब्दयोरन्यतरसङ्कोचेनोपपत्तौ उभयसङ्कोचस्यानुचितत्वात्। पत्नीत्वश्रवणस्य भगवद्विषयसर्वभूतेश्वरवाक्यभूयस्त्वस्य विनिगमत्वात्। अनिश्चितार्थश्रुतेः निश्चितार्थश्रुत्यधीनार्थनिर्णायकत्वौचित्यात्। श्रीविषयवाक्यस्य सर्व-

शब्दस्य भगवद्व्यतिरिक्तपरतया सङ्कोचात्। भगवद्विषयवाक्यस्य सर्वशब्देन श्रियोऽपि संग्रहात् श्रियो भगवन्नियाम्यत्वम् ॥

किं च सत्यप्युभयसङ्कोचे श्रीश्रीशयोर्नान्योन्यनियन्तृत्वविरहेण जगन्नियन्तृत्वसिद्धिः, वाक्यभेदापत्तेस्तयोस्तत्रासामर्थ्याच्च। नवा अर्थाद्वा कल्पनैकदेशत्वादिति न्यायेन जगन्नियन्तृत्वान्यथानुपपत्त्या भगवन्नियाम्यत्वाभावसिद्धिः, अन्यनियन्तृत्वस्य तदन्यनियाम्यत्वेन सह विरोधाभावादित्यादिकं ग्रन्थान्तरे विस्तरेणोक्तम् ॥

अत्र तु, श्रीः न भगवन्नियाम्या जगन्नियन्तृत्वात् भगवद्वत्, इत्यनुमानेन श्रियो भगवन्नियाम्यत्वाभावः कैश्चित्परिष्कृतः। तद्दोषः स्फुटमुपन्यस्यते – नियन्तृत्वं नियाम्यत्वविरहव्याप्यमीरितं। यत्तन्न धरणीदेव्यामनैकान्तिकता यतः॥ जगन्नियन्तृत्वभगवदनियाम्यत्वयोर्न व्याप्तिः भूदेव्यां व्यभिचारात्। ईश्वरीं सर्वभूतानामिति भूसूक्ते श्रवणादिति भावः। भूदेव्यां हेत्वभावोपपादनेन व्यभिचारोद्धारं शङ्कते–भूमौ श्रुतनियन्तृत्वं तद्विभूतित्वतः श्रियि पर्यवस्यति चेदेतत्तद्विभूतौ हरौ भवेत्। लक्ष्म्याः समस्तं स्त्रीनाम्नी लक्ष्मीरित्यादिषु भुवः श्रीविभूतित्वावगमादिति शङ्काशयः। परिहरति एतदित्यादिना– एतत् लक्ष्म्यां श्रुतं नियन्तृत्व तद्विभूतौ हरौ श्रीविभूतिके भवति कीर्तिः श्रीर्वाक्च नारीणां नित्यानपायिनीत्यादिषु श्रियो भगवद्विभूतित्वावगमाल्लक्ष्म्यां हेतोः स्वरूपासिद्धिरिति भावः। न च विभूतित्वमैच्छिकं इदानीमैच्छिकत्वासिद्धेरिति हृदयं। कालात्ययापदेशमाह– नियन्तृत्वन्नप्रविणमशेषत्वस्य साधने। कालात्ययापदिष्टत्वं पत्नीत्वश्रवणाद्यतः। अशेषत्वस्य भगवन्नियाम्यत्वाभावस्य पत्नीत्वश्रुत्या नियन्तृत्वहेतोः कालात्ययापदिष्टत्वं साधितसाध्यकत्वं। तथा च प्रत्यक्षेण अनुष्णत्वानुमानमिव पत्नीत्वविधायकश्रुत्या बाध इति भावः।

ग्रन्थाभिसन्धिबाधोद्धारं शङ्कते—असिद्धं यदि पत्नीत्वमसिद्धा स्यान्नियन्तृता। औपाधिकं चेत्पत्नीत्वं नियन्तृत्वं च तादृशं ॥ असिद्धा स्यादिति गूढाभिसन्धेः परिहारः। औपाधिकं चेदिति शङ्कितुरभिसन्ध्युद्घाटनम्। नियन्तृत्वं चेदिति परिहर्तुरभिसन्ध्युद्घाटनं इति विवेकः। औपाधिकं चेत् भगवतो दशरथादि शेषत्ववदैच्छिकं चेत् तादृशं औपाधिकं सेनान्यादेरिव भगवदिच्छायत्तं स्यादित्यर्थः। न नियन्तृत्वमात्रमनियाम्यत्वसाधकं पूर्वोक्तव्यभिचारात्। नाप्यनन्यायत्तं नियन्तृत्वतन्साधकं स्वरूपासिद्धेरिति हृदयम्। यद्वा असिद्धं यदि पत्नीत्वमित्यादि असिद्धपदेन बहिरङ्गं लक्ष्यते। बहिरङ्गं ह्यसिद्धमिति शास्त्रकृद्भिरुक्तम्। अयमर्थः—नियन्तृत्वं आत्मधर्मत्वादन्तरङ्गम्। पत्नीत्वं तु विग्रहविशिष्टधर्मत्वाद्बहिरङ्गं। तथा च अन्तरङ्गबहिरङ्गयोर्विरोधे अन्तरङ्गानुरोधेन बहिरंगस्य नेतव्यत्वात् पत्नीत्वस्य ऐच्छिकत्वसिद्धिरिति न तेन कालात्ययापदिष्टत्वमिति शङ्काशयः। अत्राह—असिद्धा स्यादिति। अयं भावः—न तावद्विग्रहात्मोभयनिरूपितवृत्तिकत्वं विग्रहविशिष्टधर्मत्वं तथाप्यात्मवृत्तिकत्वानपायेनान्तरङ्गत्वाक्षतेः। नापि विग्रहावच्छिन्नात्मवृत्तिकं तत् उक्तयुक्तेः। नियन्तृत्वस्यापि बहिरङ्गत्वापत्तेश्च न वा विग्रहद्वारकात्मवृत्तिकत्वं तत् कालान्तरेपि पत्नीत्वव्यवहारदर्शनात् लक्ष्मीविग्रहाणामानन्त्येन तत्र सर्वत्र पत्नीत्ववृत्तिस्वीकारे गौरवाच्च ॥

किञ्च आत्मस्वरूपं प्रति नियन्तृत्वं अन्तरङ्गं, पत्नीत्वं बहिरङ्गं इति हि भवन्मतम्। तत्र न तद्वृत्तिकत्वे सति तदितरावृत्तिकत्वं तन्निरूपितबहिरङ्गत्वप्रयोजकं ॥ तथा सति साक्षात्संबन्धेन घटवर्तिनोऽपि घटपटसंयोगस्य बहिरंगत्वं घटनिरूपितबहिरंगत्वप्रसंगात्। किन्तु व्यवहितसंबन्धेन तद्वृत्तिकत्वं तत्प्रयोजकम्। एवं च लक्ष्मीदिव्यात्मस्वरूपे साक्षात्संबन्धेन पत्नीत्वस्य वृत्तेर्वक्तव्यम्। पतिकर्तृक-

व्यापाराधीनरसभोक्तृत्वरूपस्य च पत्नीत्वस्य आत्मवृत्तित्वान्न बहिरंगत्वसंभवः। शेषित्वरूपस्यापि तस्यात्मवृत्तित्वमक्षतम्। पालयन्ती हरेर्भावं पत्नी भगवतो ह्यहम्॥ इति। भगवदभिप्रायानुविधानकर्तृत्वरूपस्य पत्नीत्वस्यात्मस्वरूपधर्मत्वमक्षतम्॥

न च शरीरविशिष्टविषयक विवाहसंस्कार निबन्धनत्वात् पत्नीत्वस्य विग्रहविशिष्टधर्मत्वं नित्यपत्न्यां तदभावात्। न च तस्य लौकिकपत्न्यां तथात्वदर्शनाद्विग्रहविशिष्टधर्मत्वम्। तथा सति नियन्तृत्वस्यापि तदापत्तेः। 'राजानमभिषेचयेत्' इति शरीरविशिष्टविषयक अभिषेकाख्यसंस्कारनिबन्धनत्वस्य राजनिष्ठनियन्तृत्वे दर्शनात्। न चानन्यार्हस्त्रीत्वरूपस्य पत्नीत्वस्य विग्रहविशिष्टधर्मत्वम्। तद्ध्यनन्यार्हस्तनादिमच्छरीरकत्वं तच्छरीरविशेषरूपमिति न तस्य शरीरविशिष्टरूपत्वं, स्वस्मिन् स्वप्रवृत्तित्वप्रसंगात्। शरीरं चात्मैकप्रकारतया तदेकधार्यत्वादात्मधर्मः इति न नियन्तृत्वापेक्षया कश्चिदपि विशेषोऽस्ति। अतो नियन्तृत्वपत्नीत्वयोः अन्तरङ्गबहिरङ्गत्वव्यवस्थानुपपत्तेर्न भवदिष्टसिद्धिरिति॥

अनयोरेव शङ्कापरिहारयोर्विवरणमौपयिकं चेत्याद्युत्तरार्थम्॥

अश्रुतेन श्रुतत्यागो न मीमांसकतोषदः।
सर्वशाखाप्रत्ययस्य निष्फलत्वं यतो भवेत्॥

श्रुतोपपत्तये ह्यश्रुतमपि कल्पनीयं नत्वश्रुतकल्पनेन श्रुतबाधनम्। तथा सति चोदनापुनरारंभः 'न वियदश्रुते'रिति मीमांसाद्वयद्वैतीयीकाधिकरणद्वयविरोधापत्तेः। तत्र हि अपूर्वकल्पनमाकाशोत्पत्तिश्च श्रुतस्वर्गसाधनत्वसर्वविज्ञानोपपत्तये निर्णीतमित्यभिसन्धायाह– 'न मीमांसकेति' श्रुतोपपत्तये काप्यश्रुतस्यापि कल्पयितव्यत्वे वाक्यान्तरश्रुतमक्रमेणापि स्वीकार्यं। अन्यथा सर्वशाखाप्रत्ययन्यायविरोधश्चे-

त्याह–'सर्वशाखेति' सहि अनुक्तांशस्वीकारफलकः इति भावः । इदं च सर्वशब्दद्वयसंकोचमभ्युपेत्योक्तं स एव नास्तीत्यन्यत्र विस्तरः ॥

श्रियो जगन्नियन्तृत्वं, विष्णुपत्नीत्वं च श्रुतं– तत्र नियन्तृत्वहेतुना श्रुतविष्णुपत्नीत्वविरुद्धधर्मसाधनेऽनिष्टमाह द्वाभ्यां–

भगवद्दिव्यदेहस्य श्रुतौ सावयवोक्तितः ।
अनित्यत्वं प्रसाध्येत प्रवाही नित्यता भवेत् ॥

सावयवोक्तितः–आननवादित्यादिसावयवत्वश्रवणात् । तथा च भगवद्दिव्यदेहस्त्वनित्यः सावयवत्वात्, संप्रतिपन्नवदित्यनुमानेन, नित्याकृतिधरमिति श्रुतनित्यत्वविरुद्धानित्यत्वसाधनं स्यात् । नित्यत्वश्रवणं च प्रवाहतो नित्यत्वपरं स्यात् । पत्नीत्वश्रुतेरैच्छिकपत्नीत्वपरत्ववदित्यर्थः । तथा चान्तरादित्यधिकरणविरोध इति भावः ॥

ननु सावयवत्वमात्रं श्रुतं–न त्ववयवारब्धत्वं अतो न तदनित्यत्वानुमानापत्तिरित्यत्राह–

आत्मनोर्ज्ञानता श्रुत्या ज्ञानशून्यत्वसाधनात् ।
ज्ञातृत्वादेरान्यविध्यमित्यनिष्टं समापतेत् ॥

आत्मनोः जीवपरयोः ज्ञानता श्रुतिः–सत्यं ज्ञानं विज्ञानं यज्ञं तनुते इत्यादिका । जीवः परश्च न ज्ञानाश्रयः । ज्ञानत्वात् धर्मभूतज्ञानवदिति ज्ञानशून्यत्वानुमानं स्यात् । विज्ञातारं जानात्येवेत्यादेः परोक्तरीत्या अन्तःकरणादिपरत्वं स्यादित्यर्थः तथा च ज्ञोत एवेत्याद्यधिकरणविरोध इति भावः ॥

वस्तुतस्तु सावयवश्रुत्या भगवद्दिव्यविग्रहेऽप्यवयवारब्धत्वानुमानं स्यादिति द्रष्टव्यम् ॥

विज्ञानघन एवेति श्रुते चाप्यवधारणे ।
सत्यसंकल्पता श्रुत्या नियोगो ह्यन्यथा कृतः ॥

श्रुतयोर्विरोधे यथायोग्यं विषयविभागप्रदर्शनेनाविरोधसंपादनं कृत्वा श्रुतद्वयमपि निरूह्यते । आत्मनि सत्यसंकल्पत्वं च श्रुतम् । तत्रावधारणस्य स्वरूपे जडांशव्यावर्तनेन सार्थकत्वान्न सत्यसंकल्पतायाः काचित्क्षतिरिति हि निर्णीतम् । एवं च पत्नीत्वविरोधिनः काऽप्यश्रवणात् कथं पत्नीत्वमैच्छिकतया नीयेत । तथा च विरोधिश्रवणेऽपि विरोधशमनेन श्रुतस्थापने दृष्टे विरोध्यश्रवणे तत्स्थापनं कैमुतिकनयसिद्धमिति भावः । नियोगोऽवधारणम् । कैमुतिकनयसिद्धत्वमाह—

अश्रुते किं पुनर्लक्ष्म्या अयाम्यत्वे श्रुतौ क्वचित् ।
श्रुतस्य पत्नीभावस्य नान्यथा नयनं भवेत् ॥

अनियाम्यत्वाश्रवणात् श्रुतपत्नीत्वान्यथानयनाभावः कैमुतिकनयसिद्धः इति भावः । समर्थनीयग्रन्थविरुद्धत्वं भवदुक्तानुमानस्येत्याह—

समर्थनीयग्रन्थेन विरोधो भवता स्फुटः ।
अनियन्तव्यभावस्य लैङ्गिकत्वगिरो भवेत् ॥

भवतां लक्ष्म्यां भगवन्नियाम्यत्वाभावस्य जगन्नियन्तृत्वलिङ्गेनानुमेयत्वोक्तिः व्याख्येयग्रन्थविरुद्धेत्यर्थः । विरोधं दर्शयितुं तद्ग्रन्थोक्तमर्थमाह—

उत्सर्गत्वमनारवाचस्तत्रोक्तमपवादता ।
ईश्वरत्वश्रुतेस्तूक्ता न तदर्हत्यपह्नवम् ॥

भगवद्व्यतिरिक्तस्य भगवन्नियाम्यत्वबोधको नारशब्दस्सामान्यविषयत्वाद्भवत्युत्सर्गः । नियन्तृत्वश्रुतिस्तु लक्ष्मीमात्रविषयत्वादपवादः

तथा च—नारशब्दावगतनियाम्यत्वस्य लक्ष्म्यां विशेषतः श्रुतेन नियन्तृत्वेन बाध इति हि तद्ग्रन्थे स्थितम् । अतः कथमिदमनुमानोक्तिः संगच्छेदिति भावः । नियन्तृत्वश्रुतेर्भगवदनियाम्यत्वाबोधकतया विरोधाभावान्न नारश्रुत्यवादत्वमित्यन्यत्र विस्तरः ॥ इति ।

तत्रैव, अथ सूक्तैरनुसरति । कूरनाथसुतमित्येतदनुसारितया, स्तुतवेदान्तदेशिकसूक्तिविरोधमाह—

अत्यन्तसाम्यमप्यस्यादृष्टान्तस्वरसागतम् ।
स्थाप्यन्नियतनिर्बाधपत्नीत्वाद्यविरोधतः ॥

इति प्रसादिता सूक्तिस्त्रय्यन्तगुरुपुङ्गवैः ।
पक्षान्तरोपन्यासत्वशङ्कान्नार्हति सूरिभिः ॥

अपि शब्दः प्राधान्यपरः । वचनसाम्यमूलकगम्यसाम्यादपि यथा सर्वगत इत्यादिकण्ठोक्तं साम्यं प्रबलमिति भावः । नियतत्वं स्वाभाविकत्वम् । निर्बाधत्वं नियन्तृत्वादिभिरबाध्यत्वं विशेषतः श्रुतत्वात् विष्णुपत्न्यघोरास्येशानेति, जगदीशानत्वहेतुतया श्रवणाच्चेति भावः । आदिपदेन स्वभूतां परिरक्षतीति उक्तस्वत्वादिकं गृह्यते । तथा च कण्ठोक्तसाम्यस्यैव पत्नीत्वानुरोधित्वे वचनसांयमूलकगम्यस्य तदनुरोधित्वं कैमुतिकन्यसिद्धमिति भावः । एवमाचार्यपादैरेव पत्नीत्वानुरोधेनात्यन्तसाम्यमपि नेयमिति उक्तत्वेऽपि जघन्यवचनसाम्यानुरोधेन पत्नीत्वस्यान्यथानयनं कथं रोचत इति सुधीभिर्विभावनीयम् ॥

इति प्रसादिता चतुःश्लोक्यधिकार इति शेषः । प्रसादेनोक्ता कर्तृकरणाद्धात्वर्थः इति णिच् । पक्षान्तरेति केचिदादिशब्दाभावादिति भावः । पञ्चमपक्षे तु केचिच्छब्दनिर्देशात् । आचार्यपादैः स्वपक्षतयैव तदुपन्यास इति वक्ष्यते ॥

अथ–पित्रे ब्रह्मोपदेष्ट्रे मे गुरवे दैवताय च ।
प्राप्याय प्रापकायास्तु यस्मादग्राहि नान्यतः ॥

इत्यादि स्ववचनव्यक्तत्वगततदेकदैवतकत्व तदेकाधीतकृत्स्नाध्यात्मशास्त्रकत्वसुरभितकुमारवेदान्ताचार्यसूक्तिविरोधमाह–

विश्वं प्रति तु शेषित्वं मातापित्रोरिव द्वयोः ।
पत्न्याश्च पतिशेषत्वात्सर्वशेषी परः पुमान् ॥

इत्थं कुमारवेदान्तगुरुभिः श्लोक ईरितः ।
विरोधपरिहाराख्ये ग्रन्थेनापह्नवक्षमः ॥

पत्न्याश्चेति लौकिकपत्नी भूम्यादिसाधारणपत्नीत्वस्यैव लक्ष्म्यास्सत्वात् । तद्वदेव भगवच्छेषत्वं श्रियोपीतिमात्र इति हृदयम् । कुमारवेदान्तगुरुभिः आचार्यपादतनयैर्वरदगुरुभिः । पुनरप्याचार्यपादसूक्तिविरोधमाह–

दम्पती इति पूर्वोक्तेरनूक्तेर्जगतां पती ।
इत्यस्य पत्नीभावस्य प्राबल्यं जगदीशनात् ॥

वृणीमहे च तावाद्यौ दंपती जगतां पती । इति ।

सारप्रथमपद्यस्थोऽयं ग्रन्थः । अत्र हि दंपतिशब्दस्य विशेष्यसमर्पकत्वम् । शरण्यदम्पती इमौ दम्पती श्रद्धावन्तौ, दम्पत्योर्निशि जल्पतोः इत्यादिष्विवोचितम् । एवं च जगतां पती । इति विशेष्योपादानं समासपुनरादानं भवति । तच्च विष्णुपत्नीत्वानुसारेण जगत्पतित्वं श्रियः नतु जगत्पतित्वानुसारिपत्नीत्वं इति बोधनायाकांक्षितत्वान्न दोषः इति परिहर्तव्यम् ॥

यद्वा श्री श्रीशयोर्जगत्पतित्वस्य सत्तोपलम्भौ क्रमेण विष्णुपत्नीत्वलक्ष्मीपतित्वाभ्यामिति बोधनार्थं तथा निर्देश इति वक्तव्यम् ।

अतो नियन्तृत्वानुसारेण पत्नीत्वस्यान्यथानयनं तद्विरुद्धमिति भावः । जगतां पती इत्यस्यानुक्तेरित्यन्वयः । जगन्नियन्तृत्वापेक्षया पत्नीत्वस्य प्राबल्यमभ्यर्हिततमसारग्रन्थप्रथमपद्याभिप्रेतमिति भावः ॥

ननु कथं श्रियो जगत्पतित्वं विष्णुपत्नीत्वायत्तमित्यत्राह—

अस्येशाना त्वमित्यत्र श्लोके श्रीस्तोत्रमध्यगे ।
शत्रादेशेन पत्नीत्वहेतुकेश्वरता श्रियः ॥

"अस्येशाना त्वमसि जगतः संश्रयन्ती मुकुन्द" मिति खण्डोऽत्राभिप्रेतः । श्रियः ईश्वरता संश्रयन्तीति शत्रादेशज्ञाप्यविष्णुपत्नीत्वहेतुकत्ववतीत्यर्थः । अत्र हि लक्षणहेत्वोरिति सूत्रमभिप्रेतम् । विष्णुपत्नीत्ववेषेण हि सर्वस्य जगत इयमीष्टे इति श्रीतात्पर्यचन्द्रिकायामुक्तम् । नित्यमपि लक्ष्म्यैश्वर्यं भगवन्नित्याभिमतत्वादेव भगवन्नित्येच्छासिद्धत्वात् भगवन्नित्यायत्तमित्यभिप्रायेण अभिमतत्वादित्युक्तम् । न पुनरभिमतत्वोक्त्या भगवदनायत्तमित्युच्यत इत्युक्तम् ॥

स्तोत्राधिकारे च ईश्वर इह स्वेतरसर्वनियन्ता स्वयमन्यैः स्वसंकल्पमन्तरेणानियाम्यः पुरुषोत्तमः इत्युक्तम् । पत्न्यन्तरतोऽपि श्रियः प्राधान्यादिह तदुक्तिः । तदपेक्षयापि भगवतः प्राधान्यव्यञ्जनाय सहशब्दः इति चोक्तम् । चतुःश्लोक्यधिकारे च पत्न्यन्तरेभ्यः प्रकर्षं विवक्षन्नित्युक्तम् । अत्र च लक्ष्म्यैश्वर्यं निरंकुशभगवदैश्वर्यापेक्षया गौणमिति स्फुटमवगम्यते । एतेनानवधिकत्वमिह स्वोत्कृष्टावधिराहित्यमित्येतदपि "विश्वं प्रति तु शेषित्वं मातापित्रोरिव द्वयोः" इत्युक्तदिशा श्रियो जगदीश्वरत्वे भगवदीश्वरत्वस्य नोत्कर्षावधित्वमीशितव्यापि शेषादिति वा भगवद्धीनोत्कर्षावधिराहित्यपरमिति वा योज्यमिति सिध्यति । अत एव सेनेशाद्यैश्वरीं गौणीं कृत्वाचार्याद्यदैश्वरीमित्येतदपि प्रत्युक्तमिति ॥

तत्रैव, अत एव हि तात्पर्यचन्द्रिकायां विष्णुपत्नीत्ववेषेण हि सर्वस्य जगतः इयमीष्ट इत्युक्तम्। न चायं वेषशब्दः कृत्रिमाकारपरः सूक्ष्मचिदचिद्विशिष्टे वेषेणेत्यादि अकृत्रिमेऽपि प्रयोगात्। न चेयमित्थंभूतलक्षणे तृतीया कारकविभक्तिप्राबल्यादिति ॥

तत्रैव अत्र च नियन्तृत्वं किं चेतनविषये पत्यभिप्रायानुगुणमाज्ञापयितृत्वमुत शरीरतया सर्वचेतनाचेतनान्तर्यामित्वमिति विकल्प्य आद्ये इष्टत्वमभिप्रयन् द्वितीये भाष्यविरोधमाह—

न नियन्तृत्वमन्यत्र परमात्पुरुषात्क्वचित्।
इति भाष्ये स्फुटं दृष्टं ब्रह्मशब्दार्थवद्धि तत् ॥

तथा च भाष्यं—तदेतत्सर्वान् लोकान् सर्वाणि च भूतानि सर्वाणि च दैवानि सर्वान्वेदान्सर्वांश्च यज्ञान् अन्तः प्रविश्य सर्वप्रकारनियमनं सर्वशरीरतया सर्वस्यात्मत्वे च सर्वज्ञात्सत्यसंकल्पात्पुरुषोत्तमादन्यस्य न संभवतीति। तथा परस्यैव ब्रह्मणः सर्वात्मत्वं सर्वशरीरत्वं सर्वस्य नियन्तृत्वं च प्रतिपाद्य च इति च। ब्रह्मशब्देति। यथा ब्रह्मशब्देन पुरुषोत्तमोऽभिधीयत इति भाष्यविरोधान्नास्या ब्रह्मशब्दवाच्यत्वम्। तथैवोपदर्शितभाष्ययोः पुरुषोत्तमपरब्रह्मशब्दबलान्निषेधावधारणाभ्यां च नास्याः सर्वशरीरतया सर्वनियन्तृत्वमिति भावः। तत् नियन्तृत्वम्। ब्रह्मशब्दार्थवत् भाष्यस्य पुरुषोत्तमादिनिर्देशनिवर्तित श्रीनिष्ठतावत्त्वेन सादृश्यं विवक्षितम्। हीति ब्रह्मशब्दार्थत्वाभावे पराभ्युपगमप्रदर्शनम्। एवं च ब्रह्मेश्वरशब्दार्थयोर्भेदोपगमाद्यादवमतप्रवेश इति भावः ॥

किं च श्रियो भगवत्तुल्यैश्वरत्वे ईश्वरः इह स्वेतरसर्वनियन्ता स्वयमन्यैः स्वसङ्कल्पमन्तरेणानियाम्यः पुरुषोत्तम इति स्तोत्राधिकारसूक्तिविरोधः। पुरुषोत्तम इति श्रियो मुख्यैश्वरत्वव्युदासः। इह

तत्त्वविभाजकोपाधिनिर्देशप्रकरणे । एतेनान्यत्र श्रिय उच्यमानमीश्वरत्वमन्यदेव नेदृशमिति विवक्षितमिति लभ्यते । भवत्कूटस्थैः पञ्चमतभञ्जनकृद्भिरप्यक्षराधिकरणव्याख्यायां प्रशासनसर्वाधारत्वयोः श्रीतत्त्वे कथंचिदप्यनुपपत्तेरिति अनुगृहीतम् । अतो नियन्तृत्वमुक्तविधं श्रियो दुर्वचम् । अत एव च तात्पर्यदीपिकायां–अन्तः प्रविश्य नियमनं भगवतो नेश्वरशब्दबलादवगतम् । अतादृश्येव ईश्वरशब्दस्य प्राक्प्रयोगदर्शनात् । किं तु अन्तर्यामिब्राह्मणादिति । तत्र नास्ति लक्ष्मीसन्निधिरित्यनुगृहीतम् । एवं कारणत्वादिनेत्यादि श्लोकद्वयेनाक्षगधियां त्वत्रोधः अन्तर्याम्यधिदैवत्याद्यधिकरणभाष्यविरोध उक्तः ॥

तत्रैव–अत्र च शेषत्वस्य ऐच्छिकत्वम्, किमनन्याधीनभगवदिच्छासिद्धत्वे सति भगवदिच्छाधीनलक्ष्मीच्छासिद्धत्वं, उत भगवतो दशरथादिशेषत्वस्येवानन्याधीनस्वेच्छासिद्धत्वं इति विकल्पमभिप्रेत्याद्यशिरसि न तावदाद्यः इष्टत्वात् मुक्तस्यापि तादृशशेषत्वाङ्गीकारात् । मुक्तस्य हि सत्यसंकल्पत्वमाविर्भूतं संकल्पादेवेत्यत्र पञ्चमी हेत्वर्थिका इच्छासिद्धत्वं चेष्टत्वातिरिक्तेच्छाधीननिष्पत्तिकत्वरूपं अत एव अस्या अपि तथैव इष्टत्वादिच्छासिद्धत्वव्यपदेशः इति व्याख्यानं कृतम् ॥ मुक्तसंकल्पश्च भगवत्संकल्पाधीनः । तथा च भाष्यं–यद्यप्यपहतपाप्मत्वादिः सत्यसंकल्पत्वपर्यन्तो गुणः प्रत्यगात्मनः स्वाभाविक एवाविर्भूतः तथापि तस्य तथाविधत्वमेव परमपुरुषायत्तमिति । श्रुतप्रकाशिकायामपि ईश्वराधीनं मुक्तस्य सत्यसंकल्पादि प्रवर्तते । अस्य जगद्व्यापारवर्जितेषु स्वभोगार्थेषु नित्यसंकल्पो भूयान्मा भून्मत्संकल्पविरुद्धेषु जगद्व्यापारेष्वित्यपवर्गप्रदानसमय एवेश्वरस्संकल्पयतीत्यभ्युपगमादित्युक्तं । परतन्त्रस्यापि सत्यसंकल्पत्वमिच्छाविघाताभावादुपपद्यत इति स्तोत्राधिकारादावुक्तं । अतो मुक्तस्यानुसंचरणादिकं भगवत्संकल्पाधीनस्वसंकल्पसिद्धमितीदृशमैच्छिकत्वं मुक्तादिशेषत्वसाधार-

णमित्यर्थान्तरमिति दूषणं हृदि निधाय द्वितीयं दूषयति—

अविधेयमनाधेयमशेषमधिकं समम् ।
नेति वस्तुपरिच्छेदाभावः स्याद्विश्वदेहिनः ॥

इति सर्वार्थसिध्युक्तिर्विरुद्धा भवतां भवेत् ।

अविधेयं अनियाम्यमित्यर्थः । तथा च भगवत्तद्ज्ञानव्यतिरिक्तस्य भगवदधीनत्वरूपभगवन्नियाम्यत्वस्य सर्वार्थसिद्धावेवोक्तेर्लक्ष्मीच्छाया भगवदधीनत्वाभावोक्तिस्तद्विरुद्धेति भावः । दूषणान्तरमाह—

प्रकार्यैकत्वनिर्णीतिः व्यर्था स्याद्भाष्यदर्शिता ।

'नेह नानास्ति किंचन' इत्यादिभिरब्रह्मात्मकस्वतन्त्रवस्तुनिषेधः क्रियत इति भाष्यादौ प्रतिपादनाल्लक्ष्मीच्छाया अब्रह्मात्मकत्वं तद्विरुद्धमिति भावः । इदमुपलक्षणं चिदचित्प्रकारकं ब्रह्मैकमेव तत्त्वं इति न्यायसिद्धाञ्जनोक्तिर्विरुध्येत । तत्र ब्रह्मणः सर्वचेतनाचेतनप्रकारत्वोक्तेरित्यपि द्रष्टव्यम् ॥

अथ स्यात् यद्यप्याचार्यपादग्रन्थेषु तुरीयपक्ष एव तत्र तत्र स्वपक्षतया प्रतीयते । तथापि स्वपक्षोन्वारोहणमात्रेणाचार्यपादैरुक्तः । अन्यथा एकायनादविशेषप्रसङ्गात् । यथाहि पुरुषविद्याधिकरणभाष्यस्यान्वारुह्य वादरूपत्वम् । तदुक्तम् —

अतः पुरुषविद्येति न्यासाङ्गं नैव युज्यते ।
अन्वारोहणमात्रेण भाष्ये तत्परिकीर्तनात् ॥ इति ।

यथा च भाष्ये—चरमश्लोकस्याङ्गप्रपत्तिपरतया योजनान्वारुह्य वादरूपा तद्वत् । अतः पञ्चमपक्ष एवाचार्यपादानामतिभार इति । तदिदमाशङ्क्य परिह्रियते—

अन्योन्येच्छाविघातादिनिवृत्तौ तत्परत्वतः ।
ऐककण्ठ्यमशेषाणामागमानां भवत्विति ॥

अङ्गीकारे भूमिदेव्यां सेनान्यादिषु सूरिषु ।
ब्रह्मरुद्रादिदेवेषु श्रुताप्नीश्वरता श्रुता ॥

अन्योन्येच्छाविघातस्य निवृत्तेर्न निषिध्यताम् ।
पत्नीत्वपुत्रपौत्रादेरविरोधस्समञ्जसः ॥

सून्यत्वकर्मवश्यत्वपारार्थ्यादिश्रुता क्वचित् ।
लक्ष्म्याः पत्नीत्ववत्विच्छासिद्धं किमिति नोच्यते ॥

अन्योन्येच्छेति । अयं श्लोकः चतुःश्लोक्यधिकारे । तत्परत्वतः तात्पर्यात् । अशेषाणां ईश्वरविधिनिषेधादिरूपाणाम् । ऐककण्ठ्यमविरोधः । परिहरति—अङ्गीकार इत्यादिना । भाष्ये गतिसामान्यच्छागपशुनयाभ्यां लिङ्गभूयस्त्वनयादिना चैकस्य ब्रह्मण एव सकलचिदचित्प्रकारकत्वमुपास्यत्वं प्रकारिण एकत्वं अन्यस्य चेश्वरत्वादिना श्रुतस्यापि—

परविद्यासु जीवोक्तिर्निरुक्त्यादेः पराश्रया ।
तल्लिङ्गानन्यथासिद्धौ तद्विशिष्टावलम्बिनी ॥

इति न्यायेन ब्रह्मप्रकारत्वमिति दिशा विशिष्टाद्वैतसिद्धान्तकरणविरुद्धस्याविरोधाद्वैतसिद्धान्तस्याङ्गीकारोपसिद्धान्तदोषावहः । तथापि तदङ्गीकारे सतीत्यर्थः । भूमिदेव्यामिति—तद्विषयेऽपि ईश्वरीं सर्वभूतानामित्यादिश्रवणादिति भावः । सेनानीति—विश्वसृज इत्यादिमन्त्रेण, स्वसंकल्पमात्रावक्लृप्तसमस्तजगज्जन्मध्वंसादिके श्रीमति विष्वक्सेन इति गद्योपबृंहितेन तत्रापीश्वरत्वादिति भावः । आदिशब्देन सुदर्शनशेषादिसंग्रहः । तद्विषयेऽपि भगवच्छास्त्रहरिवंशादिष्वीश्वरत्वावगमादिति भावः । इदमुपलक्षणं मुक्तेष्वपीश्वरत्वं स्यात् । स स्वराड्भवतीति

विशेषश्रुत्या एष सर्वेश्वर इत्यादि सामान्यश्रुतीनां संकोचनीयत्वादित्यपि द्रष्टव्यम् ॥

ब्रह्मरुद्रादीति—हिरण्यगर्भस्समवर्तताग्र इति चतुर्मुखस्यापीश्वरत्वं स्यात्। शम्भुराकाशमध्ये ध्येय इत्यादिना रुद्रस्यापि ध्येयत्वावगमादीश्वरत्वं स्यात्। आदिशब्देनेन्द्रादिपरिग्रहः। तत्रापि नकिरिन्द्रत्वदुत्तर इत्यादिना सर्वोत्कृष्टत्वावगमादिति भावः। अन्योन्येच्छाविघातस्य निवृत्तेः अन्योन्येच्छाविघाताभावपरत्वमुपगम्य भाष्योक्तविशिष्टाद्वैतसिद्धान्तं विहाय अविरोधाद्वैतसिद्धान्तमुपगम्येत्यर्थः। श्रुतौ श्रुता ईश्वरता न निषिध्यतामित्यन्वयः। तथा च देवतान्तरपारम्यनिरासप्रयासो विफलस्स्यादिति भावः। पत्नीवदिति, पुत्रश्चतुर्मुखः पौत्रो रुद्रः आदिपदेनामात्यायुधादेस्संग्रहः। एतेषां पुत्रत्वादिकमप्युभयेच्छासिद्धमेवेत्युत्कर्षरूपत्वानपायः समानः। एतेषामीश्वरत्वेऽपि भगवतो निःसमाभ्यधिकत्वस्य न हानिः एवंविधपुत्रादिकत्वस्यापि एवंविधसपत्नीकत्ववत्तदुपपादकत्वात्। अविरोधः अन्योन्येच्छाविघाताभावः समञ्जसः युक्तः लोकवेदयोस्तदवगमान्नानुपपन्नः इति भावः। शिवस्य हृदयं विष्णुः विष्णोश्च हृदयं शिवः इत्यादिभिरानुकूल्यं प्रसिद्धम्। एवं च तेषामपीश्वरत्वसिद्धौ पुत्रत्वादिकं ऐच्छिकं स्यादिति भावः ॥

सृज्यत्वेति लोकानां हितकाम्यया शापं तं ग्राह्यमुक्त्वानित्यादिना भगवतः कर्मवश्यत्वमैच्छिकमित्यवगतं तद्वदिति भावः। आदिशब्देनापहतपाप्मत्वपरिग्रहः। लक्ष्म्याः पत्नीत्ववदिति। लक्ष्मीनिष्ठपत्नीत्ववदित्यर्थः। भगवदुक्तरीत्येति शेषः। इदमुपलक्षणं तस्याः पतिविभूतित्वादित्यपि द्रष्टव्यम्। तस्यापि ह्यैच्छिकत्वं तदभिमतं इच्छासिद्धमिति। भगवदिच्छासिद्धत्वे सति भगवदिच्छानायत्ततत्तदिच्छासिद्धमित्यर्थः ॥

किमिति नोच्यत इति । श्रुतस्यापीश्वरत्वविरोधिनोऽन्यथा नयने लक्ष्मीनिष्ठस्त्रीत्वादिभ्यो देवतान्तरनिष्ठभगवच्छेषत्वादीनां न कश्चिद्विशेष इति भावः ॥

भाष्योक्तन्यायानुगृहीततत्तद्वाक्यस्वारस्यानुरोधे तु भूम्यादिवल्लक्ष्म्यामपि भगवदधीनत्वादिसिद्धिरनिवार्या । न हि प्रतर्दनादिन्यायापवादको लक्ष्मीमात्रविषये कश्चिन्न्यायो भाष्यादिषूपलभ्यते इति हृदयम् । अत एव हि स्तुतावपि—अदूरोत्क्षिप्तैरिव मधुरता दुग्धराशेस्तरङ्गैर्दूरीकुर्या न हि मधुरता दुग्धराशेस्तरङ्गानिति औत्पत्तिको धर्मिधर्मभाव उक्तः । लक्ष्मीच्छायाः स्वतन्त्रत्ववादो भाष्यादिदर्शितात् प्रच्छन्नस्पष्टबाह्याध्वनिरासादगतीकृतः । अत्र तत्त्वसंग्रहग्रन्थः कृत्स्नोऽपि योज्यः ॥

तत्र हि भगवदभयप्रदराजसूनुचरणैर्लक्ष्म्याः कारणत्वाद्यभावो विस्तरेणानुगृहीतः । न च तुरीयपक्षः आचार्यपादैरन्वारुह्योक्तः प्रमाणाभावात् । पुरुषविद्यायास्तु नैरपेक्ष्यबोधकबहुप्रमाणानुसारान्न न्यासाङ्गत्वमिति तदङ्गत्ववादोन्वारुह्य वादः । वस्तुतस्तु उपासनविशेष एव तत्र न्यासो न प्रपत्तिः । अग्निहोत्रधर्मसाम्यादग्निहोत्रशब्देन मासाग्निहोत्रमिव प्रपत्तिधर्मसाम्यादुपासनरूपोऽप्ययं न्यासशब्देनोच्यत इति तस्य पुरुषविद्याङ्गकत्वमुपपन्नमिति भाष्यस्यान्वारुह्यवादत्वमिति भगवद्वरदगुरुचरणाः । प्रपत्तेस्सकलफलप्रयोजकत्वादुपासननिर्वृत्तिफलकत्वमप्यस्तीति चरमश्लोकस्याङ्गप्रपत्तिपरतया योजना कृता नान्वारुह्यवादतयेति भावः । नाप्येकायनादविशेषप्रसङ्गः भगवदिच्छाधीननिरुपाधिकजगच्छेषित्वादिभिः तदनवकाशात् । भवद्भिरपि श्रियो गुणतस्सातिशयायाः ब्रह्मत्वानुपगमेन तस्योक्तविधयैव वारणीयत्वात् । अतः पञ्चमपक्षो नाचार्यपादाभिमत इति भावः । एवं समर्थनीयग्रन्थदूषणान्युक्तानि । अथ समर्थनानुपपत्तिमर्थान्तरन्यासेन स्मारयति-

'तद्विरुद्धव्याप्यधर्मसामानाधिकरण्यभाक्। न हि तद्व्याप्यतामेति श्रौती व्याप्तिर्यतोरुणत्। तदभावसमानाधिकरणस्य तद्व्याप्यत्वं न संभवतीत्यर्थः। श्रौती श्रुत्युक्ता यस्यात्मा शरीरमिति श्रुतिरिह विवक्षिता। अत्र हि व्यतिरेकषष्ठी स्वारस्याच्छ्रुतिष्ववच्छेदकावच्छेदकान्वयबोधस्य बहुलमुपगमाच्च भगवद्भिन्नचेतनत्वव्यापकं भगवच्छरीरमिति व्याप्तिः बोध्यते। काष्ठाप्राप्तं नियाम्यं च शरीरम्। तथा च भगवद्नियाम्यत्वविरुद्धतन्नियाम्यत्वव्याप्यभगवद्भिन्नचेतनत्वसमानाधिकरणं जगन्नियन्तृत्वं नानियाम्यत्वव्याप्यमिति भावः। अरुणत् निरुद्धवती। श्रुत्यनुक्तव्याप्त्यपेक्षया श्रुत्युक्तव्याप्तिः प्रबलेति भावः। श्रुतौ च पुंलिङ्गैकवचनान्तयच्छब्दो न श्रियमभिधातुमलन्त्वा श्रियो भवद्भिर्भगवद्वाचकशब्दस्योक्तौ विशेषणतया विषयत्वमुपगतं। स्वरूपनिरूपकतया तदुपस्थितिः सात्वार्थीति न तया शाब्द्याकांक्षा पूरयितुं शक्या। सन्नियोगशिष्टन्यायस्तु नात्र प्रवर्तत इति शरीरं चास्मि वैष्णवमित्यनेनोच्यते। इदं हि वचनं यस्यात्मा शरीरमित्यत्र यच्छब्दात्मशब्दाभ्यां क्रमेण श्रियोनुपस्थितिं च ग्राहयतीति भवत्युपबृंहणं यस्यात्मेति श्रुतेरिदं वचनं। न चात्र सर्वसाधारणशरीरत्वोक्तौ प्रयोजनाभावः। आपातप्रतिपन्नभगवदनधीनत्वनिवर्तनेन श्रुत्युपबृंहणस्यैव प्रयोजनत्वात् गुणादिसाधारणाभिमततोक्तेरेव निष्प्रयोजनत्वात्। प्रत्युत प्राणेभ्योऽपि गरीयस्याः शरीरवदभिमतत्वोक्तेर्विरुद्धत्वात्। शरीरशब्दे गौणीप्रसङ्गाद्वैष्णवमित्यस्यैकदेशान्वयापत्तेस्तात्पर्यग्राहकमात्रत्वप्रसंगाच्च न विग्रहवदभिमतास्मीति तदर्थः। अतः श्रुत्युक्तव्याप्तिः न नियन्तृत्वानियाम्यत्वव्याप्तिं सहत इति भावः। अनुमानदूषणं संकलयन्नुपसंहरति—

व्याप्तिक्षतेरुपाध्युक्तेर्बाधात्सत्प्रतिपक्षतः।
विरोधोक्तेरसिद्धेश्च न समर्था नियन्तृता॥

व्याप्तिक्षतेः व्याप्त्यभावात् नियन्तृत्वानियाम्यत्वयोर्न व्याप्तिः। पूर्वोक्तन्यायात् भूम्यामनैकान्तिकत्वाच्चेति भावः। उपाध्युक्तेरिति निषिद्धेश्वरकत्वमुपाधिः। तद्धि भगवति साध्यव्यापकं भूमौ साधनाव्यापकं च। बाधादिति। पत्नीत्वादिश्रुतिभिरिति भावः। सत्प्रतिपक्षतः श्रीर्न भगवन्नियाम्या सर्वभूतनियन्तृत्वात् भगवद्वत् इत्यत्र श्रीः भगवन्नियाम्या पत्नीत्वात् भूवदित्यस्यापि सत्वात् इति भावः॥

विरोधोक्तेरिति भगवद्व्यतिरिक्तत्वे सति नियन्तृत्वं भगवत्प्रसादकत्वरूपशेषत्वप्रयुक्तम्। हुत्वात्मानं विष्णुमाराध्य पद्मभूः इत्यादिभिरवगतं ब्रह्मरुद्रादौ दृष्टं तद्वदत्रापि भगवद्व्यतिरिक्तत्वे सति नियन्तृत्वं भगवत्प्रसादमूलकत्वं स्वस्मिन् साधयतीति वा नियाम्यत्वरूपसाध्याभावव्याप्तमिति वा विरुद्धत्वमिति भावः। भूर्न भगवन्नियाम्या नियन्तृत्वात् भगवद्वदित्यपि स्वसमीहितविपरीतसाधकत्वं विवक्षितम्। अनन्यायत्तजगन्नियन्तृत्वं हेतुतया विवक्षितुं न शक्यम्। विष्णुपत्नीत्वहेतुकजगन्नियन्तृत्वश्रवणान्मम योनिरप्स्वन्तस्समुद्र इति श्रवणाच्चेत्याशयेनाह—असिद्धेरिति स्वरूपासिद्धेरित्यर्थः। चकारेण जगन्नियन्तृत्वं न भगवन्नियाम्यत्वेनानुपपन्नमतोऽत्रार्थाद्वा कल्पनैकदेशत्वादित्यस्याप्यनवतार इत्ययमर्थस्समुच्चीयते॥

न समर्थेति अनियाम्यत्वसाधन इति शेषः। वाक्यद्वयेऽपि क्रमेण भगवतः श्रीनियन्तृत्वस्य श्रियो भगवन्नियाम्यत्वस्य चानुक्तिरेव न स्वभावोक्तिः। सर्वशब्दद्वयसंकोचकल्पनेऽपि नवा शब्दद्वयसंकोचकल्पनं युक्तम्। एकसंकोचेनोपपत्तावुभयसंकोचस्यान्याय्यत्वात्। नापि विनिगमकाभावः भूयसो विनिगमस्य दर्शितत्वात्। नापि वचनसामर्थ्यं स्त्रीप्रत्ययेन तद्बाधात्। मच्छेषभूतेत्यादिना वचनद्वयस्याप्युपबृंहितत्वाच्चेत्यादिकमपि संकलय्यानुसंधेयमिति भावः॥

अत्र श्रीतत्त्वसुधान्यायमन्दरे श्रियः भगवन्नियाम्यत्वाभाव-साधकानुमानखण्डनपूर्वकं भगवन्नियाम्यत्वं ईश्वरत्वाभावः । सन्नियोगशिष्टन्यायाप्रवृत्तिरित्यादिकं क्रमेण प्रतिपादितम् । तात्पर्यदीपिकायां द्वयाधिकारे – आकारानुयायिनान्तु सकृदेवाश्रयणमभिमतं तस्य च कार्यं न मोक्षप्रदानं तस्य ब्रह्मलक्षणत्वात् । श्रियोऽपि ब्रह्मत्व-स्वीकारे पाद्मसंहितायां–ब्रह्मलक्षणप्रश्ने वासुदेवाद्वयमिति उत्तरोक्ति-र्विरुध्यते अव्याप्तत्वात्– अतः श्रीविशिष्टब्रह्मशब्दार्थमिति मतम् ॥

तन्न । किं ब्रह्मशब्देन श्रीः प्रकारतया बोध्यत इत्यभिमतं उत तुल्यवत्? आद्ये प्रवृत्तिनिमित्तं श्रीः न ब्रह्मलक्षणे लक्ष्या न हि गोत्वं गोलक्षणे लक्ष्यम् । श्रियश्च ब्रह्मशब्दवृत्तिनिमित्तत्वे ब्रह्मत्वस्यैव प्रवृत्तिनिमित्तताप्रतिपादकेन बृहत्त्वं चेत्यादिभाष्यग्रन्थेन विरोधः । नापि द्वितीयः पुरुषपर्यायतया ब्रह्मशब्दः प्रयुक्त इति श्रुतप्रकाशिका-विरोधात् इत्यादिना श्रियः मोक्षप्रदत्वाभावः वात्सल्याद्युद्बोधक-त्वानुमन्तृत्वसामरस्य प्रेरकत्वादि च प्रतिपादितं सिद्धधर्मप्रकाशि-कायां–

ननु एकशब्दस्य मां शब्दोक्तार्थव्यतिरिक्तोपायान्तरव्यावर्त-कत्वेऽपि परतत्वान्तर्भूतायाः श्रियो मां शब्दार्थान्तर्गतत्वेन तद्व्यवच्छे-दाभावात् चरमश्लोकस्य भगवदेकोपायत्वमसिद्धमिति चेन्मैवं ब्रह्म-शब्देन च स्वभावतो निरस्तनिखिलदोषोनवधिकातिशयासंख्येय-कल्याणगुणगणः पुरुषोत्तमोऽभिधीयते इति भाष्ये पुरुषोत्तमस्यैव ब्रह्मशब्दवाच्यत्वोक्त्या नारीणामुत्तमायास्तच्छब्दवाच्यत्वायोगेन पर-तत्त्वान्तर्भावायोगात् ॥

वेदान्तास्तत्त्वचिन्तां मुरभिदुरसि यत्पादचिह्नैस्तरन्ति । इति । श्रियः परतत्त्वव्यावर्तकोक्त्या तस्या व्यावर्त्यान्तर्भावायोगाच्च । ह्रीश्च ते लक्ष्मीश्च पत्न्यौ इति लक्ष्मीपतेरेव परत्वोक्त्या लक्ष्म्या अपि

परतत्त्वान्तर्भावे पतिपत्नीभावासंभवाच्च । सत् ब्रह्म आत्माकाशादि-शब्द विशेषनिर्धारकनारायणशब्दस्य संज्ञात्वनिमित्तकणत्वविशिष्टस्य लक्ष्मीवाचकत्वायोगेन तदयोगाच्च न च नारायणशब्दस्य लक्ष्मी-भगवदेतदुभयसंज्ञारूपत्वं तथा सति त्रिमूर्तिसंज्ञारूपत्वस्यापि संभवेन नारायणशब्दस्य विशेषनिर्धारकत्वस्यैवासंभवप्रसङ्गात् ॥

नारायणशब्दस्य देवतान्तरसंज्ञात्वमसिद्धमिति चेत्, लक्ष्मी-संज्ञात्वमपि तथैव इति । अत्र श्रियः परतत्त्वानन्तर्भावः चरमश्लोकस्य मां शब्दादीनां विशिष्टपरत्वाभावश्च प्रतिपादितः । ब्रह्मत्वस्यैव प्रवृत्तिनिमित्ततप्रतिपादकेन ब्रह्मत्वं चेत्यादिभाष्यग्रन्थेन विरोधः । नापि द्वितीयः पुरुषपर्यायतया ब्रह्मशब्दः प्रयुक्तः इति श्रुतप्रकाशिका-विरोधात् इत्यादिना श्रियः मोक्षप्रदत्वाभावः वात्सल्याद्युद्बोधकत्वा-नुमन्तृत्वसामरस्यप्रेरकत्वादि प्रतिपादितम् । संप्रदायचन्द्रिकायां तृतीय-प्रकाशे—

एवं च दृष्टद्वारेणानुपयुक्तत्वात् श्रियः साधनता नास्ति । देवराजगुरुभिश्च – न च गुणविग्रहयोरहेतुत्वप्रसङ्ग इति वाच्यम् । ज्ञानशक्त्यादिगुणाभावे भगवतः पापनिवर्तकत्वाभावात् । तत्संभवे सति तत्संभवाच्च । गुणादीनां साधनत्वमवश्यं वक्तव्यं एवंविध-दृष्टोपयोगाभावेन लक्ष्म्या न गुणप्रतिबन्दिमुखेन साधनत्वसिद्धिः ॥

ननु चानादिकालमाज्ञातिलङ्घनप्रयुक्तभगवत्कालुष्यविनिवर्तन-कुपोत्तम्भनादिरूपदृष्टमुखेन लक्ष्म्याश्च साधनत्वमस्तीति चेत्, इदं तु पुरुषकारकृत्यं तच्चाङ्गीकृतमेव – तदतिरेकेण दृष्टव्यापाराभावेन न गुणन्यायप्रवृत्तिरित्येवन्निरणायीति । तत्रैव स्थलान्तरे– किं च लक्ष्म्या मोक्षोपायत्वं परामर्शदशायां न संभवति । तथाहि– उपायत्वं नाम कारणत्वं – तच्च किं सत्तया प्रतिपाद्यते, उत

व्यापारकर्मत्वेन, आहोस्वित् व्यापारकर्तृत्वेन वा? नाद्यः काला-दृष्टादीनामेव तथाविधकारणत्वाभ्युपगमात् ॥

न द्वितीयः, तस्याश्चेतनत्वेन कुलालाधिष्ठितदण्डवद्व्यापारविषयत्वाभावात् । भगवदधिष्ठितचतुर्मुखादिवदङ्गीकारे च मोक्षरूपकार्यं प्रति पुरुषकारत्वातिरिक्तव्यापाराभावेन हेतुत्वायोगात् ॥

न तृतीयः, इतरानधिष्ठितव्यापारकर्तृत्वस्य तस्यासंभवात् । अत एव भगवता मोक्षयिष्यामि इति तथाविधसंकल्परूपव्यापारत्वप्रतीतेरुपायत्वमङ्गीकृतमिति तत्रैव स्थलान्तरे ॥

किंच अपृथक्सिद्धविशेषणवाचिशब्दानां चरमविशेष्यभूतपरमात्मपर्यवसानं वेदान्तव्युत्पत्तिसिद्धमिति अन्यत्र प्रयुक्ताहंपदस्य भगवत्परत्वं युक्तम्— नान्यत्र तेषां चरमविशेष्यत्वाभावात्, प्रकृते चाहंपदस्य लक्ष्म्यामपर्यवसानवृत्तेर्वक्तुमशक्यत्वात् भगवत्परत्वमेव सिद्धम् । प्रत्युत यत्र यत्र प्राधान्यतया लक्ष्म्या उपायत्वं प्रतिभाति तत्र लक्ष्म्यादिशब्दानां भगवत्परत्वं युक्तमिति सर्वतः भगवत एव फलप्रदत्वसिद्धेः ॥

ननु अहन्ता ब्रह्मणस्तस्य साहमस्मि सनातनीत्यनेन लक्ष्म्या अहन्तारूपत्वप्रतिपादनात्, अहमिति प्रतीतेः लक्ष्मीविषयकत्वं सिद्धमिति चेन्न — भगवत्प्रकारेषु लक्ष्मीस्वरूपप्रकारस्यातिशयपरत्वात् । तद्वचनस्याहंप्रतीतौ लक्ष्म्या विषयत्वं वदता भवता धर्मिभूत ज्ञानविषयत्वमुच्यते, उत धर्मभूतज्ञानविषयत्वं वा? नाद्यः धर्मिभूतज्ञानस्य स्वरूपमात्रविषयकत्वेन आत्मान्तरविषयकत्वाभावात् । अन्यथा स्वरूपैक्यापत्तेः ॥

न च द्वितीयः, धर्मज्ञानविषयस्य धर्मिभूतज्ञानविषयस्य

चाहन्तारूपत्वायोगात् । अत एव विवरणरूपचरमश्लोकस्थाहंपदस्य विशिष्टपरत्वाभावेन भगवन्मात्रपरत्वात् । मन्त्ररत्नपूर्वखण्डे श्रीमच्छब्दस्य विशिष्टपरत्वेऽपि लक्ष्म्याश्शरण्यत्वं विशेषणत्वेन न सिध्यतीति स्थितमिति तत्रैव स्थलान्तरे ॥

अपरत्वं च स्वव्यतिरिक्तनियाम्यत्वं ततश्च लक्ष्म्याः स्वव्यतिरिक्तसर्वेश्वरनियाम्यत्वेनापरमात्मत्वे सिद्धे ब्रह्मशब्दस्य तत्र न मुख्यवृत्तिः । यदि लक्ष्म्याः सर्वनियामकत्वेन भगवन्नियाम्यकत्वमभ्युपगम्येत तर्हि उभयोस्सर्वनियामकत्वेन परस्परनियामकत्वेन च ईश्वरद्वित्वापत्तिः उभयोरपि परस्परनियाम्यत्वेन निस्समाभ्यधिकत्वाभावात् अनीश्वरत्वापत्तिश्च पतिपत्नीभावानुपपत्तिश्च स्यात् । न च यजमानपत्नीन्यायेन भगवत्सृष्टिकर्मणि अनुमन्तृत्वेन कारणमस्तीति वाच्यम् । तथाविध कारणत्वस्य भूदेवीसाधारणत्वात् । एतेन यजमानपत्नीन्यायेन लक्ष्मीमोक्षप्रदत्वे चोद्यं दत्तोत्तरं । अग्निसापेक्षकर्मसु विधिबलात्पत्नीकर्तृत्वमभिहितम् । न चेह तथा विधिरस्ति । तदङ्गीकारे प्राकृतपतिपत्न्योरिव दिव्यदम्पत्योः कर्मवश्यत्वप्रसङ्गः ॥

किं च लक्ष्म्याः जगत्कारणत्वाभ्युपगमे ब्रह्मत्वमिव तत्समव्याप्तानन्तत्वमपि स्वीकर्तव्यम् । न चेदमपि लक्ष्म्याः अनन्तत्वस्य त्रिविधपरिच्छेदराहित्यात्मकत्वेन तत्र देशतः कालतः परिच्छेदराहित्ये त्वत्पक्षे सत्यपि वस्तुपरिच्छेदराहित्याभावात् । सर्वस्य भगवदात्मकत्वेन तद्व्यतिरिक्तवस्त्वभावादनन्तत्वं भगवदसाधारणमेवेति । अत्र संप्रदायचन्द्रिकाग्रन्थे – श्रियः भगवद्गुणतुल्योपायत्वाभावः, भगवत्तुल्यमोक्षोपायत्वाभावः, चरमश्लोकस्थाहंपदवाच्यत्वाभावः, ब्रह्मपद-वाच्यत्वाभावः, यजमानपत्नीन्यायाप्रवृत्तिश्चेत्यादिकं क्रमेण प्रतिपादितम् ॥

श्रीवचनभूषणमीमांसाभाष्ये – लक्ष्म्याः उपायत्वशोधनाधिकारे–न च आत्मात्मीयभरं सर्वं निक्षिप्य श्रीपतेः पदे इत्यादिप्रमाणैः श्रियोऽपि भरसमर्पणप्रतिसंबन्धित्वं भरस्वीकर्तृत्वं विष्णोरिव फलप्रदत्वं चावगतमिति । उपायत्वसामान्यवचनानामुक्तविशेषपर्यवसानं युक्तमिति वाच्यं उपाये गृहरक्षित्रोरिति रक्षकत्वोपायत्वयोः परस्परमर्थान्तरत्वेन सामान्यविशेषभावापन्नत्वाभावात् । रक्षकत्वं फलप्रदत्वं प्रतिपदविहितोपायस्थाननिविष्टत्वमुपायत्वमिति तयोरत्यन्तभेदात् ॥

तत्रापि देव्याः रक्षकत्वमपि न भगवत्तुल्यरक्षकत्वं प्रतिपाद्यते–तथात्वे मातृत्वप्रयुक्तसहजवात्सल्यादीनां पत्नीत्वप्रयुक्तपारतन्त्र्यादीनां च नाशापत्तेः। अत एवोच्यते–युवत्वादौ तुल्येऽपीत्यादि। अतस्तत्रापि रक्षकत्वं न पतितुल्यम्। अन्यत्र देवतयोः स्वतन्त्रत्वेन रक्षणेऽपि–अत्र विशेषणत्वेन विशेष्यतुल्यरक्षकत्वमनुपपन्नम्। किं तु विशेषणत्वानुगुणं तद्रक्षणोपयुक्तं तद्गुणोद्बोधकत्वं शेषशेषिणोः शेषशेषिभाववत्तन्कृत्ययोरपि शेषशेषिभावस्य उचितत्वात् ॥

यच्च दुर्गतिप्रदानेऽपि लक्ष्म्याः प्रयोजकत्वमुक्तं; तन्न, तत्र लक्ष्म्याः स्वपारतन्त्र्यानुगुण्येन अनुमन्तृत्वस्यैवोक्तत्वात् । अतः कदाचिदपि लक्ष्म्याः कालुष्यगन्धाभावात् तदुपायत्वं न भगवत्तुल्य फलप्रदत्वम्, न वा भगवत्तुल्योपायत्वमिति, तदुपायत्वपरवचनानां न समाश्रयणघटकविरोधित्वमिति ॥

तत्रैव लक्ष्म्याः गौणोपायत्वनिषेधाधिकारे– नात्र शरणशब्देन विशेष्य इव विशेषणेऽप्युपायत्वसंबन्धो बोध्यते । तस्य शृणाति इति व्युत्पत्त्या श्रीशब्द एव बोधितत्वात् । न हि प्राप्तेऽर्थे पुनर्विधिसंभवः, न च श्रीशब्दरूढ्या लक्ष्म्युपस्थापकत्वमात्रमवय-

वार्थे न विवक्षेति वाच्यम्। शृणाति निखिलान् दोषानित्यादिना श्रीशब्दस्यावक्षवार्थे-पुत्पादकत्वात्त्रैयर्थ्यात्। तथा वेद्यत्वाय खलु शास्त्रमवयवार्थव्युत्पत्तिं करोति। न च तद्वेयान शरणशब्देना-नूद्यत इति वाच्यं, एकेनैव शब्देन विशेष्यांशे विधायकत्वं विशेष-णांशेऽनुवादकत्वं चाशक्यम्। अनुवादप्रयोजनं च न पश्यामः। न चैतेनैवास्मदभिमतसिद्धेरिष्टापत्तिरिति वाच्यम्। शृणातीत्यादि-व्युत्पत्त्यावगतोपायत्वं सद्वारकमद्वारकमित्याकांक्षायां—तत्रैव श्रीयते श्रयते शृणोति श्रावयतीति व्युत्पत्तिचतुष्टयेन पुरुषकारत्वप्रतीत्या तत्प्रतीत्यनुपायत्वसमर्थसामर्थ्यलिङ्गेन सद्वारकमवगतं ततश्च सद्वारकं रक्षकत्वं चेद्भवदभिमतं तदोमिति ब्रूमः॥

ननु सद्वारकरक्षकत्वस्य तत्र प्रतिपादनेऽप्यत्र शरणशब्देन अद्वारक-रक्षकत्वं प्रतिपाद्यत इति चेत्—अत्र किं रक्षकत्वं विधीयत इत्युच्यते, उत रक्षकत्वस्य अद्वारकत्वं आहोस्वित् विशिष्टम्? नाद्यः, श्रीशब्द एव तद्विधेः। न द्वितीयः, अद्वारकशब्दाभावात् शरणशब्दस्य विशेष्ये अद्वारकरक्षकत्वविधायकत्वं विशेषणे अद्वारकत्वमात्रविधायकत्वं चेति विरुद्ध व्यापारापत्तेः। सद्वारकत्वस्य श्रीशब्दावगतत्वेन तद्विरोधे-नाद्वारकत्वविधानानुपपत्तेश्च सद्वारकत्वस्योपक्रमावगततया प्राबल्यात्। उक्तदोषादेव न तृतीयोऽपि॥

किंच लक्ष्म्याः सद्वारकोपायत्वं अद्वारकोपायत्वं च विरुद्धम्। पूर्वमेव द्वारेणान्यथासिद्धत्वात्। न ह्येककार्यं प्रत्येकस्यान्यथा-सिद्धत्वं अनन्यथासिद्धत्वं च संभवति। व्रीहिद्वाराग शेषभूतप्रोक्षणस्य व्रीहितुल्यं यागशेषत्वं हि न संभवति। एवं श्रीशब्दे पुरुषकार-द्वारकरक्षकत्वस्यावगतत्वात् अप्राप्तं ब्रह्मोपायत्वमेव शरणशब्दो बोध-यति—एवं पुरुषकारद्वारकरक्षकत्वविशिष्टलक्ष्मीविशिष्टं प्रत्ययेन बोध्यत

इति विद्यायां तद्बोध्यत्वसंभवः । अतो नाकारिणस्तु विज्ञानमित्यादि-
विरोधः ॥

किंच नीलमुत्पलमितिवदत्र लक्ष्मीसामानाधिकरण्यमुपायत्वस्य शरणशब्देन बोध्यत इति शाखादिवत् न तस्या बहिर्भावसिद्धिः ॥ बहिर्भूतस्यैवोपलक्षणत्वे जगज्जन्मादेः ब्रह्मलक्षणत्वाभावप्रसङ्गः । ततश्च सुश्लिष्टैकतत्त्वस्यापि न विरोधः ॥

किं चात्र गुणविग्रहसामानाधिकरण्यमात्रमुपायत्वस्य बोध्यम् । न तु दण्डी गच्छतीत्यत्र गमनक्रियाया विशेषणविशेष्योभयान्वयवत् शरणशब्दार्थोपायत्वस्य विशेषणेऽप्यन्वयः उपायत्वस्य चेतनधर्मस्या-चेतनेष्ववस्थानायोगात् — उत्तरवाक्ये तु उपेयत्वस्य विशेषणेऽप्यन्वयस्संभवति । तस्य चेतनाचेतनसाधारण्यात् । एवं लक्ष्मी-सामानाधिकरण्यमात्रमुपायत्वस्य बोध्यम् । ततो विधेयांशगुणादिव-द्विशेषणत्वेनापि विषयत्वेन कमपि विरोधं पश्यामः ॥ नाप्युपायत्वा-भावे मोक्षप्रदत्वकर्मणि ऐकरस्यहानिः । पुरुषकारत्वेन तदन्वित-त्वात् । अन्यथा जगत्कारणत्वादौ गत्यभावप्रसङ्गात् ॥

किं चाश्लेषविनाशयोरीश्वरविषये क्षमिष्यामीत्येकरूपार्थत्वं लक्ष्मीविषये क्षमायुक्तं करोमीत्यर्थकत्वं च वाच्यं — तन्न संभवति — विरम्यव्यापारप्रसंगात् । एवं विधूननश्रुतेरपि क्षान्तं क्षमस्वेत्येवं रूपार्थद्वयबोधकत्वं विरम्यव्यापारं विना न संभवति । अतो भरस्वीकाररक्षासंकल्पायोगात् न भगवत्पारतन्त्र्यानुगुणोपायत्वसिद्धिः । न च विद्यामात्रस्यात्मेतितूपगच्छन्तीति शेषत्वज्ञानरूपत्वात् शेषत्व प्रतिसंबन्धित्वं च मिथुनस्यैति लक्ष्म्याः भरसमर्पणप्रति-संबन्धित्वे सिद्धे स्वीकाररक्षासंकल्पावप्यवगताविति वाच्यम् । शरणागतिविद्यायां तादर्थ्यवाचकशब्दाभावेन केवलं भरस्वीकार-

प्रार्थनेन शेषत्वानुसन्धानाभावात्– पश्चाङ्गभरसमर्पणं नात्र प्रतिपाद्य-मिति द्वितीयाधिकारे उक्तम् ॥

सिद्धान्ते लक्ष्म्याः भक्तितुल्योपायत्वाङ्गीकारेऽपि न तस्य शरणशब्दार्थत्वेन वेद्याकारत्वम् । किंतु पुरुषकारत्वस्यैव श्रीशब्दे शृणातीत्यादिव्युत्पत्तिबोध्यत्वेन तस्य वेद्याकारत्वं ततश्च पुरुषकारद्वार-मुपायत्वं श्रीशब्दवेद्यमित्युक्तं भवति । एवं लक्ष्म्याः पुरुषकारत्व-व्यतिरेकेणोपायस्याभावात् तत्वेनोपायत्वस्य भरस्वीकारप्रार्थनापूर्व-भावित्वात् च उपायत्वदृष्टान्तेन न पुरुषकारसापेक्षत्वाश्रिहेतुकत्वा-सिद्धिरिति । तत्रैव लक्ष्म्याः विभुत्वभङ्गाधिकारे– चेतनवशीकारस्य चेतनसजातीयत्वस्याभ्यर्हितोपायत्वात्तद्वाचकशब्दवाच्यत्वमत्राभिप्रेतं । स च मकारो नारशब्दश्चेति । श्रियस्तद्वाच्यत्वे– माङ् माने, इति धातोः, नृ नये इति नृ गताविति धातोश्चाणुत्वसिद्धौ विभुत्वप्रति-पादकस्मृतिवचनानि विरोधाधिकरणनयेन बाधितानीत्यर्थः । न च मकारनारशब्दवाच्यत्वासिद्धिः । मकारवाच्यत्वाभावे लक्ष्म्या भगव-च्छेषत्वासिद्धिप्रसङ्गात् । समस्तशब्दमूलप्रणवे तदसिद्धौ सर्वत्र तदसिद्धिप्रसङ्गात् । नारशब्दवाच्यत्वं चागमे नारशब्दव्याख्याने-ऽभिहितम् । ज्ञानादयो गुणानुरूपं लक्ष्मी नित्यानपायिनीति । भाष्यकारैरपि गद्ये नारशब्दार्थत्वेन साभिहिता । योऽसौ श्रियः श्रीः परमा तेन नारायणः स्मृतः इति हारीतस्मृतिश्च– एवं विभुत्वस्य श्रुतिबाधवत्– सत्यज्ञानादिवाक्यविरोधोऽस्ति । लक्ष्म्या अनन्तत्वे तस्य लक्षणत्वायोगात्– न च तत्र विशिष्टस्य लक्षणत्वं विवक्षितमिति वाच्यम् । अणुत्वपरमूलमन्त्रविरोधात् । सत्यादिपदानां द्विवचनान्त-तापत्तेश्च । न च सत्यादिपदवाच्यत्वेऽपि ईश्वरस्वरूपस्य सदृशलक्ष्मी-स्वरूपसुश्लिष्टत्वादर्थसामर्थ्येन सत्यादीनां लक्ष्मीस्वरूपलक्षणत्वसिद्धि-रिति वाच्यम् । लक्ष्म्यास्तादृशस्वरूपस्यागमात्सिद्धौ– अर्थसामर्थ्या-

द्वेदेऽपि तत्तात्पर्यकल्पनम् ; वेदस्य तत्तात्पर्ये सिद्धे तदविरोधेनागमस्य तादृशस्वरूपबोधकत्वमित्यन्योन्याश्रयात् । प्रवृत्तिनिमित्ते सति शब्दस्य तत्र तात्पर्ये च सति वृत्या बोधकत्वाविवक्षाया अन्याय्यत्वात् । तद्विवक्षायां च पदानां द्विवचनतापत्तिः । अतस्सत्यादिवाक्यानां विशिष्टलक्षणत्वे तात्पर्याभावात् लक्ष्मीविभुत्ववचनानां तद्बाधो युक्तः । किंच स्वरूपव्याप्तिरन्तर्विवक्षिता बहिरेव वा, नाद्यः ईश्वरस्वरूपे अन्तर्व्याप्तेरभावात् । न चेष्टापत्तिः, मध्यमपरिमाणत्वेनानित्यतापत्तेः । न चेश्वरस्वरूपस्य गुणव्यापकत्वाभावेऽपि तदुपपत्तिवदत्रापि संभवः । तत्र द्रव्यभूतगुणेष्वन्तर्व्याप्तिसत्वेऽपि व्यापकगुणैरेव सगुणत्वप्रसंगात् । ननु च लक्ष्मीस्वरूपस्येश्वरस्वरूपान्तर्गतत्वेऽपि तत्र नियन्तृत्वन्नास्तीति चेदसंकुचितज्ञातृत्वयुक्तस्य तदभावानुपपत्तेः । तत्रापि नियन्तृत्वे न तस्येशे कश्चनेत्यादि विरोधः । न द्वितीयः, अणुत्वश्रुतिविरोधात् । संसारस्य तन्निग्रहफलत्वापत्तेश्च । 'एष एवासाधुकर्म कारयति यमधोनिनीषतीति' अन्तर्यामिणो निग्राहकत्वात् सर्वान्तरत्वे नारायणशब्दवाच्यता च स्यात् । ततश्च द्वये श्रीशब्दद्वयवैयर्थ्यात् चरणानित्यपि स्यात् विभुत्वेन नियन्तृतया सर्वात्मकचेतनाचेतनवाचकसर्वशब्दवाच्यता स्यात् । सा चार्थो विष्णुरियं वाणीति निषिद्धा । तथात्वे सर्वशब्दमूलभूताकारवाच्यतापि स्यात् । न चेष्टापत्तिः तत्रार्थसंप्रदायविरोधात् उकारेणोच्यते लक्ष्मीरिति वचनविरोधश्च, लोकत्रयशब्दस्येश्वरान्यत्रिविधचेतनाचेतनपरत्वान्नियंतृत्वेन धारकत्वेन पुरुषोत्तमत्वापत्तिश्च विभुत्वे तत्वत्रयबहिर्भावश्च एकदेशलक्षणसत्वेऽपि पूर्णलक्षणाभावात्तस्यैव तत्तत्वनियामकत्वात् । शेषत्वादीश्वरत्वाभाव वदनणुत्वाच्चेतन बहिर्भावापत्ते रावश्यकत्वात् । अन्यथा भोक्तेत्यादिश्रुतिविरोधः ॥

एवं विभुत्वस्यानेकप्रमाणबाधितत्वात्तत्परवचनानि वैभवपराणि

न च नीलादिव्यावर्तनेनात्र तथोक्तौ प्रशंसानिदानं किमपि वाच्यम् । तत्र दृश्यत इति वाच्यम् । ईश्वरस्वरूपव्यापकस्य लक्ष्मीधर्मभूतज्ञानस्य भगवत्स्वरूपस्येव तद्गतजगत्कारणत्वसर्वान्तरत्वसर्वनियन्तृत्वादिसमस्तवैभवहेतुत्वाद्व्यापकस्वरूपस्य यद्यत्कार्यं तत्सर्वमनेन धर्मभूतज्ञानेन निर्वाह्यत इति तद्वेन लक्ष्मीस्वरूपत्वेनोपचर्यते । यथा अजडत्वादिगुणसाम्यात् शुद्धसत्त्वे ज्ञानत्वव्यपदेशः । गुणप्रकाशकत्वाद्विग्रहे षाड्गुण्यव्यपदेशः । यथा वा अहङ्कारकार्येष्विन्द्रियेषु भूतानामाप्यायकत्वेन तज्जन्यत्वव्यपदेशः ॥

तथा विभुस्वरूपकार्यजगत्कारणत्वादौ एतद्धर्मभूतज्ञानस्य सहकारित्वेन कारणत्वात् तत्र स्वरूपत्वव्यवहारः । महिष्यन्तरधर्मभूतज्ञानं तु नैवंरूपं— अतो भगवत्स्वरूपं स्वगतसमस्तमङ्गळगुणादिकं प्रति धर्मित्वेन हेतुभूतं, तथा तत्स्वरूपव्यापकं धर्मभूतज्ञानमपि तद्गतमङ्गळसर्वगुणसहकारिकारणमिति तत्र स्वरूपत्वोक्तिः यथा लक्ष्मीकटाक्षलेशयोगाच्चतुर्मुखादीनां सश्रीकत्वं एवमेव स्वरूपव्याणुत्वेऽपि स्वरूपमात्रस्य सश्रीकत्वमुपपद्यते । एतद्विवक्षया श्रीशास्त्रे- स्तोत्र गद्ये च तत्स्वरूपानन्त्योक्तिः । एवं बीजस्थानीयस्य भगवतो जगत्कारणत्वे जलसेकवल्लक्ष्मीधर्मभूतज्ञानस्य सहकारितया जगत्कारणत्वोक्तिः ॥

तथा भगवतस्सर्वनियन्तृत्वे तदुपयुक्तज्ञानशक्त्याद्युद्बोधकतया सर्वनियन्तृत्वोक्तिश्च । अन्यथा एकमेवाद्वितीयं क्षरात्मानावीशते देवः इत्यादिशब्दानां द्विवचनानुपपत्त्या वेदान्तानामतत्परत्वस्य पूर्वमेवोक्ततया तत्तद्वाक्यस्थनिषेधवचनानां लक्ष्मीकारणत्वादिनिषेधपरत्वात् । अन्यथा कारणवाचकाकारवाच्यतापत्तिः ! जगज्जन्मादेरीश्वरलक्षणत्वाभावापत्तिश्च एवं धर्मभूतज्ञानस्य भगवत्स्वरूपादिसकलव्यापक-

व्यापकत्वेन तत्तत्सकलवैभवहेतुकत्वात् सर्वभावानुगामित्वतद्धर्मधर्मित्वादिकमत्युपपन्नम् ॥

अत एवोच्यते—श्रद्धया देवो देवत्वमश्नुते इत्यादि । तस्माद्विभुत्ववचनानामीश्वरस्वरूपानुबन्धित्वेन सकलवस्तुगतधर्मभूतज्ञानपरत्वं कारणत्वादिपराणामन्तरङ्गसहकारिपरत्वम् । नियन्तृत्ववचनानां तदुपयोगिज्ञानशक्त्याद्युद्बोधकपरत्वं चोचितम् । श्रुतिविरोधे स्मृतीनामेव संकोचस्येष्टत्वात् । न चेश्वरीं सर्वभूतानामिति श्रुतिरेव सर्वनियमनमसंकुचितमाह— अतोन्तर्बहिश्च व्याप्तिसिद्धिरिति वाच्यम् । क्षरात्मानावीशते देव एक इतीश्वरान्तरनिषेधकण्ठोक्त्या सावकाशा उदाहृतश्रुतिर्बाह्यनियमनपरा । अस्येशाना जगतो विष्णुपत्नीत्यत्र नियमनस्य पत्नीत्वेनौपाधिकत्वश्रवणात् । ननूक्तप्रकारेण लक्ष्म्या अनन्तत्वं सर्ववस्तुशरीरत्वलक्षणं न भवति । किं त्वाकाशादिवदन्तर्बहिश्च व्याप्तत्वमात्रं कारणत्वादिकमपि स्वरूपस्य तत्तत्सहकारित्वमित्यभ्युपगमे— विभुत्ववचनानां मुख्यत्वं सिध्यतीति । तथात्वे न कोऽपि विरोधोऽस्तीति चेत्, मैव · अणुत्वश्रुतिविरोधात् ॥

तत्वान्तरत्वापत्तेश्च— तस्माद्विभुत्वं न स्वरूपगतम् । अथवा चेतनाचेतनयोरन्तर्बहिश्च प्रत्येकं परिसमाप्य वर्तमाने ब्रह्मस्वरूपे अणुत्वपरिमाणं लक्ष्मीस्वरूपमपि तत्र तत्र वर्तत इति व्यापकमित्युच्यते । एवं निरूपकत्वेन स्वरूपान्तर्गतत्वात् स्वरूपगतं कारणत्वादिकमपि लक्ष्मीस्वरूपगुणमित्युच्यते । निरूपकत्वं च नीळादीनां नास्तीति तद्व्यावृत्तिर्विभुत्वादिना प्रतिपाद्यते— निरूपकत्वं च विग्रहस्य श्रीवत्सवदणुत्वेऽप्युपपद्यते । यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम इत्याद्यपि निरूप्य व्याप्य सर्ववस्तुषु परिसमाप्याणुत्वेन तत्र तत्र विद्यमानाभिप्रायम् । विग्रहव्याप्त्यभिप्रायं वा भवेत् ॥

तस्माल्लक्ष्म्या विभुत्वेन नियन्तृत्वाभावात् संसारस्य स्वनिग्रहरूपत्वाभावेन न तन्निवृत्तौ हेतुत्वमिति। अत्र श्रीवचनभूषणमीमांसाभाष्ये—लक्ष्म्याः भगवत्तुल्योपायत्वाभावः भगवद्गुणतुल्योपायत्वाभावः। अणुत्वसमर्थनं विभुत्वभङ्गः इत्यादिकं क्रमेण प्रतिपादितं भावटिप्पण्याम्—सत्यं ज्ञानमनन्तं ब्रह्मेतिश्रुतौ विभुत्ववाचिना अनन्तशब्देन लक्ष्म्यादीनां व्यावृत्तिर्हि श्रीभाष्ये प्रतिपादिता॥

अत्र लक्ष्म्या अनन्तपदेन व्यावृत्तत्वं श्रीचतुःश्लोकीभाष्ये निगमान्तगुरुभिरप्यङ्गीकृतम्। परं तु तैः क्लिष्टगतिराश्रिता। नैतद्युज्यते—श्रुतिस्वारस्यभङ्गात्। तत्र तस्याः क्लिष्टगतेः परपक्षत्वेनैवोदाहृततया निगमान्तगुरूणां न तत्र नैर्भर्यम्। अत एव लक्ष्म्याः अणुत्वमेव तैस्तत्र स्वपक्षत्वेन परिगृहीतम्। तथाहि—चतुःश्लोकी भाष्ये अणुत्वेन वैषम्येऽपि इत्यादिना लक्ष्म्याः अणुत्वस्थिरीकरणेन पूर्वपक्षं कृत्वा अत्रोच्यत इत्यादिना तस्य स्वयमेव समाधानमकरोत्। विभुत्वपक्षे तु अत्र केचिदित्यादिना परमुखेनैव समाधानमुक्तं अणुत्वपक्षे तु भोगोपोद्घातकेळीचुलकितभगवदैश्वर्यानुभावेति परमाणुभूताया अपि तस्यापि तस्या विभुभूतभगवद्वशीकरणसामर्थ्याङ्गीकारात् श्रियो माहात्म्यातिरेकस्सिध्यति। अनन्तं ब्रह्मेत्यत्रानन्तपदश्रुतेः स्वारस्यं च न हन्यते। विभुत्वपक्षे तु चेतनसामान्यस्याणुत्वग्राहकश्रुतीनां भगवदसाधारणानन्तपदश्रुतेश्च अस्वारस्यम्। पर्वतखननेन मूषिकाग्रहणन्यायेन जडतत्त्वान्तर्गतकालादिसाधारणं स्थूलत्वमेव लक्ष्म्यास्सिध्यति न प्रभावातिशयः इतीति॥

श्लिष्टभूषणे व्यापिनी जलशायिनी पवित्रं ते विततं ब्रह्मणस्पते स चानन्त्याय कल्पते। नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नस्स्वतस्सुखीत्यादिषु भूम्यादीनामपि विभुत्ववचनसत्त्वेन लक्ष्म्याः विभुत्ववचनमपि न तदसाधारणवैभवरूपम्। विभुत्वस्य सर्वमूर्तद्रव्यसंयोगरूपस्य

सर्वचेतनधर्मभूतज्ञानकालादिसाधारणत्वेन माहात्म्यरूपत्वं च न संभवतीति। सद्दर्शनसुदर्शने—

वक्ति स्पष्टं पौरुषं सूक्तमेकं सर्वज्ञानं निस्समं वै पुमांसम्।
तस्यार्धांशः श्रीसमाख्या यदि स्यात् लक्ष्म्याः स्त्रीत्वं व्योमपाथोजतुल्यम्॥

नैजार्धांशस्यैव पत्नी यदि श्रीः पुंस्त्वं भर्तुः स्याच्छशस्येव शृङ्गम्।
सर्वं पूर्णं वासुदेवोऽसि पूर्ण इत्यर्धांशे पूर्णतोक्तिर्विरुद्धा॥

ब्रह्मार्धं चेद्याति नारायणाख्यां मूको भूयात्तर्हि तस्यानुवाकः
पूर्णं ब्रह्मैवाथ नारायणश्चेत् तत्पत्नी श्रीः काः स्वयं ब्रह्मभूता।
वस्तुद्वन्द्वं चेत्परब्रह्मसंज्ञं प्रत्येकं तद्ब्रह्मता दुर्लभा स्यात्
वेदैर्दिव्यो देव एकान्तरात्मा भूयोभीतो भाति नारायणो हीति॥

विस्तरस्तु பரந்தரஹஸ்ய परमरहस्यत्रय श्रीमालाधिप-वंश्ययामुनाचार्यप्रणीत तत्त्वसंग्रह तत्त्वदीप तत्त्वभूषण तत्त्वनिर्णय तत्त्व-रूपण रहस्यामृत रहस्यमञ्जरी रहस्यविवेक रहस्यत्रयसार रहस्यत्रय-मीमांसाभाष्यपूर्वोक्तग्रन्थादौ द्रष्टव्यः। अतः श्रियः पत्नीत्वशेषत्वा-णुत्वादिकं स्वतस्सिद्धमिति सर्वमनवद्यं इत्यलमधिकविचारेण॥

प्रकृतमनुसरामः। निम्नस्थले जलप्रवृत्तिः मध्यसेतुखण्डना-त्स्वाभाविकी भवति तद्वत् संसारनिवृत्तिः। मार्गस्य समीकरणेऽपि अश्मनः निम्नस्थलप्रवृत्तौ प्रेरणमपि कर्तव्यं तद्वत् ज्योतिष्टोमादौ फले औपाधिक फलस्य प्रतिबन्धकनिवृत्तिः स्वरूपादिपरिष्कार-श्चावश्यकौ। निरुपाधिकफलस्य स्वतः प्राप्तत्वं प्रतिबन्धकनिवृत्ति-मात्रमपेक्षितम्। अश्मनः कार्यद्वयं, जलस्य एककार्यं, जलस्य निम्नदेशगतिः स्वाभाविकी तद्वत् मुक्तिः स्वाभाविकी, तस्याः तत्वज्ञानं दृष्टविधया कारणं, तत्वज्ञानस्य दुःखजन्मप्रभृतीत्याद्यनु-

सारेण दृष्टविधया मोक्षसाधनत्वेऽपि मोक्षस्य निर्हेतुकभगवत्प्रसाद-लक्षणादृष्टसाध्यत्वाभ्युपगमेन तत्त्वज्ञानस्य स्वयं प्रयोजनभगवत्प्रसादार्थत्वाभ्युपगमेन च कुदृष्टिमतप्रवेशशङ्का ॥

अस्मत्सिद्धान्ते न्यासविद्या शरणागतिविद्या च भिन्ना । शरणागतिशब्देन प्रपत्तिस्तु विशेषिता इति प्रपन्नपारिजाते– वात्स्यवरदाचार्यश्रीसूक्तेः । न्यासविद्या च, तान्त्रिकन्यासविद्या, वैदिकन्यासविद्या चेति द्विविधा । तान्त्रिकन्यासविद्या आनुकूल्यस्य संकल्पः इति । न्यासः पञ्चाङ्गसंयुतः इत्युक्तरीत्या आनुकूल्याद्यङ्गपञ्चकसहिता वैदिकन्यासविद्या च पुरुषविद्याङ्गसहिता पुरुषविद्याधिकरणोक्ता ॥

उपनिषण्णेत्युपनिषदिति व्युत्पत्त्या ब्रह्मसमीपवर्तित्वबोधनात् स्ववाक्येन ब्रह्मप्रतिपादनात् उपनिषद्विद्यायाः शब्दरूपायाः ब्रह्मपरत्वं । तथैव व्युत्पत्त्या यौगिकार्थमवलम्ब्य ब्रह्मविषयग्राहकत्वाद्विद्यायाः ज्ञानपरत्वं बोध्यम् । यथा दहरविद्यादीनां भक्तित्वेनैकरूपत्वेऽपि उपसंहार्यगुणानां भेदाद्विद्याभेदः । तद्वत् शरणागतिविद्यान्यासविद्ययोः प्रपत्तित्वेनैकरूपत्वेऽपि शक्यतावच्छेदकोपसंहार्य गुणरूप, रूपादिभेदाद्विद्याभेदः तथैवानुगृहीतं त्यागशब्दार्थटिप्पण्याम्– कार्पण्यादिपञ्चकविधिवादभङ्गनामकद्वितीयवादे ।

संयोगरूपचोदनाख्याविशेषैर्न्यासशरणागत्योर्भेदो हि दुरपह्नवः । स्वार्थकैङ्कर्यरूपफलान्तरसंयुक्तो न्यासः । मोक्षयिष्यामीति उपायकृत्यलक्षणपरगतस्वीकारात्मकफलसंयुक्तं वरणम् । स्वरूपभरफलसमर्पणं न्यासस्य रूपं । तदेकोपायता याच्ञावरणस्य रूपम् । क्षेत्रज्ञे ब्रह्मणि न्यसेदिति न्यासस्य चोदना । मामेकं शरणं व्रजेति वरणस्य चोदना, न्यासविद्येति न्यासाख्या शरणागतिरिति वरणाख्या

इति संयोगरूपचोदनाख्याभेदैन्न्यासशरणागत्योर्भेदस्यान्यत्र पूर्वाचार्यैः प्रपञ्चितत्वात् तस्मान्मामेकं शरणं व्रजेति वरणविधायकवाक्ये न्यासविद्याप्रतिपादनगन्धाभावात् ॥

अहमस्म्यपराधानामालयः किंच नो गतिः। त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः ॥ शरणागतिरित्युक्ता सा देवेस्मिन्प्रयुज्यतां। अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्विका। तदेकोपायता याच्ञा प्रपत्तिश्शरणागतिः ॥

इत्यादि शरणागतिप्रकरणेषु कार्पण्याद्यङ्गप्रसङ्गाभावाच्च सर्वधर्मान्परित्यज्येत्यत्र शरणागत्यङ्गतया कार्पण्यविधानोक्तिर्दुरुक्तिरेवेति ॥

शरणागतिः उपायविषयकसमीचीनगतिः प्रार्थनात्मकबुद्धिरित्यर्थः। द्वयं अनुष्ठीयमानार्थप्रकाशकः शरणागतिमन्त्रः न तु न्यासमन्त्रः। आनुकूल्याद्यङ्गपञ्चकसहिताङ्गिन्यासप्रतिपादनाभावात्। शरणागतिन्यासयोः ऐक्यमपि पूर्वोक्तरीत्या नास्ति। सन्न्यासस्त्याग इत्युक्तः शरणागतिरिति वचने—अङ्गपञ्चकसहितस्याङ्गिनः न्यासस्य यदा कदाचिच्छरणागतिविषयत्वं वा संभवेदिति। षड्विधा शरणागतिरिति वचने—प्रत्येकं षण्णां शरणागतिशब्दवाच्यत्वं वा संभवेदिति च फलितार्थः प्रतिपादितः। न स्वरूपैक्यं प्रतिपादितमिति मन्तव्यम् ॥

श्रीमच्छब्दस्य आनुकूल्यसंकल्पसूचकत्वं न संभवति। श्रयन्तीं श्रीयमाणामिति निरुपाधिकपुरुषकारत्वप्रतिपादनेन पुरुषकारापेक्षायाः प्रतीयमानत्वात् श्रीमानहमिति निर्देशाभावात् श्रीमन्नारायणेति उपायेऽन्वयेन भगवत एव पुरुषकारसापेक्षत्वस्य प्रतीयमानत्वात्। अहमस्म्यपराधानामालय इति चेतने सापराधत्वस्य प्रतीयमानत्वात्। आनुकूल्यसंकल्पप्रातिकूल्यवर्जनरूपाङ्गेन सूचिते, शब्दतः शरणपदोप-

श्लिष्टप्रपूर्वकपद्लृधातोः उपायत्वाध्यवसायस्यैव प्रतिपादनात् गोप्तृत्ववरणाद्यङ्गसहितमन्यापस्य वाचकशब्दाभावात् शरणागतिमन्त्र एव। शरणं व्रजेत्यत्रोक्ता शरणागतिविद्या प्रपत्तिः। स्नात्वा भुञ्जीतेत्यत्र भोजनस्य रागप्राप्तत्वात्, तत्र न विधिः स्वारसिकी, विधेः स्नानविधान एव स्वारसिकत्वम्। तद्वदत्र शरणवरणस्य रागप्राप्तत्वात्त्वमेव त्वामेवेति वचनबलात् तस्योपायत्वनिषेधात् आकिञ्चन्यानन्यगतित्वविशिष्टाधिकारिणः कर्मत्यागविधौ तात्पर्यमस्तीति युक्तम्॥

अप्रामाण्यज्ञानाकळङ्कितस्वरूप याथात्म्यज्ञानवतः पुरुषस्य ईश्वर एव उपायः न तु भक्तिप्रपत्ती। ब्रह्मास्त्रबन्धस्य शणवल्कलबन्धविरोधित्वम्। तद्बन्धे निवृत्तेरपि विरोधित्वं नास्ति। स्वप्रवृत्तिनिवृत्तिमात्रं न प्रपत्तिः, भगवत्प्रवृत्तिविरोधिनी या स्वप्रवृत्तिः तन्निवृत्तिः प्रपत्तिरित्युक्तत्वात्। स्वप्रवृत्तेर्भगवन्निग्रहरूपत्वात्। स्वरक्षणप्रवृत्तिनिवृत्तेर्भगवदिष्टत्वात्तस्याः प्रतिबन्धकत्वं नास्ति। मोक्षार्थं धर्मत्यागे न प्रवृत्तिः अपि तु सिद्धोपायप्रवृत्तिविरोधिनी स्वप्रवृत्तिरिति तत्त्यागे प्रवृत्तिः। सा प्रवृत्तिः स्वरक्षणार्थव्यापारो न भवति। तथा चेत्कैङ्कर्यादीनामपि तथात्वं स्यात्। स्वर्गकामना अधिकारः, यागः उपायः, स्वर्गः फलं तद्वत् मोक्षफलं प्रति शरणवरणं अधिकारः न साधनं भवति। साधनं तु ईश्वर एव। तथोक्तं रहस्यमञ्जर्याम्—

उपायान्तरसन्त्यागविशिष्टोपायसंग्रहः। श्रीमता चरमश्लोकपूर्वार्धेन विधीयते। त्यागस्य वरणाङ्गत्वं स्याद्विशिष्टविधेर्बलात्। स्नानादेरर्चनाङ्गत्वं स्याद्विशिष्टविधेर्बलात्। स्नानादेरर्चनाङ्गत्वं यथात्वा श्रुतिनिश्चितम्। परित्यज्य व्रजेत्युक्त्या धर्माणां त्यागकर्मता। त्याज्यत्वे सर्वधर्माणां नित्यानां च स्वरूपतः। त्यागः स्यादिति चेत्सत्यं स्वीकाराङ्गतया हि सः। त्यागो विधीयते यज्ञे यागकर्माङ्ग-

भावतः । नित्यनैमित्तिकादीनां यावद्दीक्षाविधिस्तथा । आत्मयागस्वरूपायाः प्रपत्तेरङ्गभावतः । तद्भिन्नसर्वधर्माणां त्यागः स्पष्टं विधीयते ॥

यद्यशक्त्या स्वतस्सिद्धत्यागोनूद्येत तन्मते । त्यागस्य राजसत्वेन नाकिञ्चन्यं फलं भवेत् । यतः कर्तव्यबुध्येति कृतत्यागस्य तत्फलम् । ज्ञातुं कर्तुं च शक्त्या वा त्यजतस्त्वधिकारिणः । शक्यांशस्यानुवृत्तौ च न विरोधो यतस्ततः । अस्यागात्सर्वधर्माणां सर्वशब्दो निरर्थकः । नास्तिक्यात् त्यजतस्त्यागः तामसः परिकीर्तितः । दुष्करत्वधिया त्यागो राजसः परिकीर्तितः ।। स्वस्वरूपविरोधित्वात्त्यागस्सात्विक ईरितः । साम्याद्भक्त्याद्युपायानां देवताविषयान्तरैः ॥ नमसा शिक्षितात्यन्तपारतन्त्र्यनिजाकृतेः । चेतनस्य विरुद्धास्ते नित्यं भक्त्यादयस्ततः ।। प्रपत्तौ यद्यशक्तानामधिकारो नियम्यते । तदा सर्वाधिकारत्वं प्रपत्तेर्न हि युज्यते ॥ सर्वे एव प्रपद्येरन् शक्ताशक्ताविशेषतः । मुमुक्षुत्वाधिकारत्वाच्छ्रद्धायाश्च निमित्ततः ॥ शक्ताशक्ताश्च ये सर्वे प्रपत्तावधिकारिणः । अशक्तानां प्रपत्तिस्स्याच्छक्तानां भक्तिरिष्यते ।। इति वार्तास्मदाचार्यगोष्ठीषु न हि जीवति । सर्वेषां भगवच्छक्तिर्जीवातुरिति निश्चयात् ॥ श्रीमतः पूर्वसिद्धत्वात्सिद्धोपायमिमं विदुः ॥

अथवा यत्नसाध्यत्वात्सिद्धोपायमिमं विदुः । अतोस्य सिद्धोपायांशे कर्तव्यन्नावशिष्यते ॥ उपायः कृत्यसाध्यश्चेद्विधिर्निर्विषयो भवेत् । इति चेदुच्यते सम्यक् श्रूयतामवधानतः ॥ अप्रमत्तेन भेत्तव्यमित्यत्र हि यथा विधिः । तथा जानीहि मामेवेत्युपायं वदता स्फुटम् । उपायाध्यवसायस्तु कर्तव्य इति चोच्यते ॥ त्यागाभावे तु नोत्पत्तिः स्वीकारस्य यतस्ततः । त्यागस्य सर्वधर्माणां त्वाश्रुत्याङ्गत्वमुच्यते ॥

श्लोके मामेकमित्यत्र त्वेकशब्दोऽवधारणे । तेन स्वीकार-तत्कर्त्रोरुपायत्वं निवर्तते ॥ स्वतन्त्रोपायनिष्ठानां सिद्धोपाये स्थिति-र्नहि । सिद्धोपायस्य तद्भङ्गप्रापकाऽसहता यतः ॥ तत्सिद्धोपाय-निष्ठस्य साध्योपायत्वधीरपि । स्वनिष्ठाभङ्गकत्वेन स्वप्राप्यप्रति-बन्धिका ॥ यतः शास्त्रेऽस्य भक्त्यादेः प्रपन्नस्यापि चान्वये । पातकान्वयवत् सद्यः प्रायश्चित्तं विधीयते । प्रायश्चित्तविधानं च कुतश्चेदिति तच्छृणु ॥

अपायतौल्याद्भक्त्यादेः दयाहेतुत्वघाति च । शोकसंजनक-त्वाच्च पातकत्वोक्तिनः स्मृता । देवतान्तरशब्दादिभोगावण्यतौल्यतः । अनुष्ठाने स्वभोक्तृत्वमात्रे पर्यवसानतः । फलदानेऽन्यसापेक्षा नित्याहङ्कारगर्भितः ॥ मदिराबिन्दुसंमिश्रतीर्थवत्प्रापकान्तरम् । इत्याह कुरुकेशार्याः श्रीभाष्यस्य प्रवर्तकाः ॥ प्रापकान्तरमज्ञानामुपायो ज्ञानिनां तु तत् । अपायः स्यादपायत्वं स्वरूपच्युतिहेतुतः ॥

प्रपत्तावानुकूल्यादेरङ्गत्वं नास्ति किं पुनः । संभावितस्वभावास्ते प्रपन्नस्याधिकारिणः ॥ अवहन्यादिति विधौ यथा स्वेदोद्गमस्तथा । आकिञ्चन्यैकशरणा यतो भाग्याधिकास्ततः ॥ गद्ये श्रीभाष्यकारेण स्तोत्रे यामुनदेशिकैः । न्यासानुष्ठानवेळायामानुकूल्याद्यनुक्तितः । आकिञ्चन्याद्यनुष्ठानात् त्यागोऽङ्गमिह नेतरः । उपायाभाससंत्याग-पूर्वकोपायसंग्रहम् ॥ वदतो मन्त्ररत्नस्य द्वयत्वमुपपद्यते । तस्माद्द्वयो-पदेष्टा यस्य आचार्यतमो यथा ॥ श्रोता द्वयस्य यच्छिष्यस्स एवेति नियम्यते । भक्त्यादयस्स्वरक्षार्थस्वव्यापारस्वरूपिणः ॥ स्वरक्षणार्थ-स्वकृतिनिवृत्तिर्न्यसनं यतः । दोषो निवृत्तिः कर्मादेः प्रवृत्तिर्न्यसने तथा । भक्तेस्तु सर्वापेक्षत्वात्प्रपत्तेर्निरपेक्षतः । भक्तिः प्रवृत्ति-साध्यत्वाद्दुष्करानुचितात्मनाम् । निवृत्तिसाध्यत्वान्न्यासः सुकरश्चो-चितात्मनाम् ॥ चेतनेनेश्वरप्राप्तौ न्यासोऽप्यनुपधिर्महान् ॥

अयमर्थो यथा स्पष्टं दृश्यते भारते स्मृतौ । परेण चेतने लभ्ये पातकोऽप्यनिवारकः ॥ अयमर्थो यथा स्पष्टं श्रीगुहे दृश्यते स्मृतौ । अतः श्रीआप्यकुन्दुस्त्वमर्थत्यागाङ्गपूर्विकाम् ॥ मत्स्वापराध-कोटौ तां प्रपत्तिं स्वकृतां ततः । अशेषतः क्षमस्वेति गद्ये क्षामण-मातनोत् ॥ श्लोकाष्टके च मद्वार्थश्लोकतात्पर्यनिर्णये— नालं प्रपत्तु कर्तासि त्वमेव मदघक्षये । इत्यस्मिन् दृढविश्वासो वाक्यन्ते चरमं स्मरन् ॥ इत्याह सर्वशास्त्रज्ञः स्वातन्त्र्यभयविह्वलः । प्रसादहेतुर्न्यासः स्यात् प्रसन्नस्य ह्युपायता । अतो हि पारंपर्येण प्रपत्तेरप्युपायता ॥ इति ये केचन प्राहुः स्वातन्त्र्यावेशमोहिताः । न परीक्षाक्षमस्सोऽपि स्वमनोरथकल्पितः ॥

न्यासप्रसादयापेक्षः प्रसादो न्यासहेतुकः । न्यासप्रसादयो-रित्थं अन्योन्यापेक्षतो मिथः । अन्योन्याश्रयदोषः स्यात् प्रसाद-स्साध्यते यदि । पूर्वप्रसादजन्या स्यात्प्रसादान्तरसंभवः । यद्यात्मा-श्रयदोषः स्यात् स्वस्य स्वोत्पत्तिहेतुतः ॥ न्यासप्रसदने हेतुस्स तत्पूर्वप्रसादतः । तत्पूर्वं न्यासतस्सोऽपि यदि स्यादनवस्थितिः ॥ यदि बीजांकुरन्यायान्नदोषायानवस्थितिः । तद्वत्प्रसदनस्यैव साध्या नित्यं परम्परा ॥ अस्तु को दोष इति चेदनिर्मोक्षः प्रसज्यते । तच्चेतनेन कर्तव्यभागं यदधिकारिणः ॥ विशेषणं तन्नोपायो हेतु-र्भगवतः कृपा । कृपया केवलं मां त्वमात्मसात्कुरु मा चिरम् ॥ कृपया शिक्षय मनस्त्वमेव धरणीधर । नित्यपारार्थ्यधीरेव देवायात्म-समर्पणम् ॥ इत्थं हि यामुनार्याद्यैः स्तोत्रादौ सम्यगीरितम् । यतोऽहङ्कारगर्भत्वं स्वगतस्वीकृतेस्तु तत् । उपाय श्रीपतिगतस्वीकारो नित्य एव सः ॥

यद्युपायं परगतस्वीकारो मोक्षहेतुकः । सर्वे एव प्रमुच्येरन् नित्यत्वादिति चेत्तु न ॥ पापाभिसंधिविरमात् अथ यादृच्छिकादितः ।

हरेः कृपानपायापि फलायालं हि देहिनाम् । अभिसन्धिविरामश्च तन्निर्हेतुकवीक्षणात् ॥ इत्यत्र भगवद्वाक्यश्रुतिस्मृत्यार्यसूक्तयः । परश्शतं प्रमाणानि प्रदश्यन्तेऽधुना स्फुटम् ॥

यथा हि मोषकेत्यादौ दया निर्हेतुकी स्फुटा । निर्हेतुककटाक्षेण प्राप्नुवन्ति परां गतिम् ॥ नासौ पुरुषकारेण प्रेक्षे कश्चित्कदाचन । यत्कृपाविषयीभूता न्जानन्ति भवार्णवम् ॥ इत्यादिभगवद्वाक्याद्या निर्हेतुकी मता । आत्मबुद्धिप्रसादं तं मुमुक्षुश्शरणं वृणे ॥ तस्यैव परमात्मासौ स्वां तनूं विवृणुते स्वयम् । उन्निनीषति यस्साधु कर्म कारयतीति तम् ॥ यान्निनीषति अधः कर्म साधु कारयतीति च । धातुः प्रसादादीशमहिमानमहं गतः ॥ येन गच्छति धातायं तेनासौ सह गच्छति । इत्यादि नित्यनिर्दोषश्रुतेर्निर्हेतुकी कृपा ॥

पापानां वा शुभानां वा न कश्चिन्नापराध्यति । स तं निपतितं भूमौ कृपया पर्यपालयत् ॥ एवं संसृतिचक्रस्थे भ्राम्यमाणे स्वकर्मभिः । जीवे दुःखाकुले विष्णोः कृपा काप्युपजायते । इत्येवमितिहासादौ स्मृतिष्वपि बहुस्थले ॥

उपायः श्रीसखस्यैव कृपेति परिघुष्यते । कृपया केवलमिति स्तोत्रे यामुनदेशिकैः ॥ मदीययैव दयया केवलं मामवाप्स्यसि । इति श्रीभाष्यकारेण गद्ये च प्रतिपादनात् ॥ वयं ते केवलकृपानिर्वाह्ये वर्ग उन्नताः । इति श्रीगुणरत्नाख्यकोशे भट्टारकोक्तितः ॥ करणत्रितयोत्पन्नमहापापक्रियस्य मे । कालत्रयेऽपि भगवत्क्षमैव शरणं भवेत् ॥ यतिराड्विंशतौ सौम्यवरयोगीन्द्रसूक्तितः । कृपामात्रमनोवृत्तिरशक्तस्य प्रसीद मे ॥ इत्थं जितं ता वचनात्कृपेतरनिवर्तकात् । इत्येवं भगवद्वाक्यश्रुतिस्मृतिगुरूक्तिभिः । कृपैव रक्षकं विष्णोरित्यस्माभिर्विभाव्यते ॥

स्वीकारो येन न कृतः श्रीपतिस्तन्न रक्षति। स कृतो येन तं श्रीशो रक्षति स्वयमेव यत्। तत्स्वीकारविशिष्टोऽयं उपायस्सिद्ध उच्यते ॥ विशिष्टस्य ह्युपायत्वे स्वीकारोऽप्युपपद्यते । इत्येवं ये कुतर्केण स्वीकारोपायतां जगुः ॥ निरस्तास्ते समस्ताः स्युः पदेनैकेन ताडिताः। तेषान्न पूर्वमीमांसा प्रवेशो न मनागपि ॥

विशेष्यवृत्त्युपायत्वं यतो न हि विशेषणे। गोदोहनेन प्रणये-त्पश्वर्थी चेति चोदिते ॥ गोदोहनविशिष्टस्य हेतुत्वं यद्यपि श्रुतम् ॥ तथापि तस्य प्रकृतयागभागस्यानुपायता । तथात्रेत्यपरामृश्य मृदुप्रज्ञै-र्यदीरितम् ॥ विशेषणस्योपायत्वं विशेषज्ञैर्विगर्हितम् । यथा गुणै-र्विशिष्टस्योपायत्वेऽपि श्रियः पतेः ॥ वात्सल्यज्ञानशक्तीनामुपयोगः पृथक् पृथक् । वात्सल्यं दोषभोग्यत्वे सौलभ्यं दर्शने दृशा । शक्ति-राश्रित कार्याणां सिद्धौ हि विनियुज्यते ॥ ज्ञानमाश्रितसंबन्धि-विरोधिज्ञानकारणम् । शुभाश्रयो विग्रहः स्यात् घटकत्वं तथा श्रियः । सर्वेषामुपयोगो हि स्वरूपानुगुणो मतः ॥ इति ।

ननु प्रसदनस्य व्यापाररूपत्वेन, प्रपत्तेः व्यापारवत्वेन करणत्वं संभवतीति चेन्न, प्रसदनस्य व्यापारलक्षणासंभवात्, तथोक्तं संप्रदायचन्द्रिकायां द्वितीयप्रकाशे – नन्वेवं शरणवरणस्य साधनत्वं यद्यप्रसक्तं तदा तन्निषेधो नोपपद्यते । यदि विधितः तत्प्रसक्तम्, तदापि तन्निषेधायोगात् । अतः निषेधवाचकानां विहितव्यतिरिक्तनिषेधपरत्वं वक्तव्यमिति चेन्न, नह्यप्रसक्तं साधनत्वं निराकरोत्येकपदं । न च विधितः प्रसक्तं वा, किं तु मुमुक्षो-रवश्यकर्तव्यत्वे सति, किं भगवद्भजनवत्प्रपदनमपि साधनमिति शङ्काप्राप्तौ वा साधनत्वं निराकरोति ॥

भगवच्छास्त्रे च – चितः परमचिल्लाभे प्रपत्तिरपि नोपधिः ।

विपर्यये तु नैवास्य प्रतिषेधाय शक्नुयात् ॥ इति प्रपत्तेरनुपायत्वं व्यक्तमुक्तम्। अहिर्बुध्न्यसंहितायां च—नमसः प्रपदनरूपप्रतिपादकत्वे-नार्थप्रकाशनसमये, नन्तव्यः परमश्शेषी शेषा नन्तार ईरिताः। नन्तृनन्तव्यभावोऽयं न प्रयोजनपूर्वकम् ॥ उपाधिरहितो नायं येन भावेन चेतनः। नमति ज्यायसे तस्मै तद्वै नमनमुच्यते ॥ शाश्वती मम संसिद्धिरियं प्रह्वीभवामि यत्। पुरुषं परमुद्दिश्य न मे सिद्धिरतोऽन्यथा ॥ इत्यादिवचनैर्नमः शाश्वतपरप्रयोजनकथनाच्च। स्वव्यतिरिक्तप्रयोजनान्तरपरनिरपेक्षत्वं तस्य रूपमिति प्रतिपादितत्वाच्च प्रपदनस्यानुपायत्वं सिद्धम् ॥

एतत्सर्वमभिप्रेत्य निगमान्तदेशिकैर्न्यायसिद्धाञ्जने—इयं केवल-लक्ष्मीशोपायत्वप्रत्ययात्मिका स्वहेतुत्वधियं रुन्धे किं पुनस्सहकारिणा-मिति शरणागतेरनपायत्वं कण्ठोक्तम्। न्यासतिलके च—त्वय्येव, त्वदुपायधीरपि हितस्योपायभावास्तु मे इति साधनभावरहिता शरणा-गतिरेव प्रार्थिता। श्रीभट्टार्यमिश्रैरपि—उपायोपेयत्वे तदिह तव तत्त्वं, न तु गुणावतस्त्वां श्रीरङ्गेशय शरणमव्याजमभवं इत्यत्राव्याजपदेन प्रपदनस्यानुपायत्वमभ्यधायि इति, तत्रैव प्रपदनानुपायत्वस्यानन्यथा-सिद्धानेकवचनन्यायलक्षणप्रमाणसिद्धत्वात् ॥

किं च भगवतः निरपेक्षोपायत्वभङ्गस्स्यात्, रक्षाभरसमर्पण-भङ्गश्च। न च यद्यत्साङ्गं तत्तत्साधनमिति न्यायेनानुकूल्याद्यङ्ग-पञ्चकसहितप्रपदनमपि साधनमस्त्विति वाच्यम्। अस्य न्यायस्यानु-पायत्वप्रतिपादकवचनविरोधात्। न हि वचनविरोधे न्यायः प्रवर्तते। न च प्रपदनस्य मोक्षसाधनत्वाभावे—किमर्थं तदनुष्ठानमिति वाच्यम्। भगवद्दासभूतस्य चेतनस्य तत्प्रसादस्य परमप्रयोजनत्वेन तत्सिध्यर्थं तदनुष्ठानस्यावश्यकत्वात् ॥

नन्वेवं तर्हि प्रपदनस्य प्रसादरूपव्यापारद्वारेण मोक्षहेतुत्वमायातमिति चेन्मैवं प्रसादस्य व्यापारलक्षणलक्षितत्वाभावेन तद्द्वारेण हेतुत्वासंभवात् तज्जन्यत्वे सति तज्जन्यजनकत्वं हि तल्लक्षणम् । तस्य जन्यत्वांशे सत्यपि मोक्षस्य प्रपदनाजन्यत्वे तज्जन्यजनकत्वांशासिद्धेरिति ॥

तत्रैव चतुर्थप्रकाशे— ननु धर्मशब्दस्य मोक्षहेतुभूतकर्मज्ञानाङ्गकभक्तिप्रतिपादकत्वेन प्रकृते वक्तव्यत्वात् । शूद्रादीनां तादृशकर्मादिषु अधिकाराभावेन तत्त्यागाङ्गक प्रपदनाधिकारो न स्यादिति चेन्न, अलौकिकस्य श्रेयस्साधनत्वस्य धर्मशब्दप्रतिपाद्यत्वेन, मोक्षहेतुभूतकर्मादिष्वधिकाराभावेऽपि दीपारोपणमालाकरणकर्मादिष्वधिकारानपायात् । तत्र मोक्षोपायत्वबुद्धेः भ्रान्तिरूपतया वा शङ्कया वा प्राप्तिसंभवात् । तत्त्यागाङ्गकप्रपदनाधिकारस्य तेषामपि वक्तुं शक्यत्वादिति । अतः सिद्धोपायफलभूतप्रपत्तेः अधिकारिविशेषणत्वमेव ॥

अधिकारिणः पुरुषस्य विशेषणं फलान्वयितावच्छेदकधर्मः । कर्तृविशेषणं, अनुष्ठीयमानकर्मादि, उपायस्य सिद्धत्वावस्थायां— अर्थित्वमात्रमधिकारिविशेषणं अधिकार इत्यर्थः । प्रकृते फलभूत ईश्वरः उपायः सिद्धः । त्वमेवोपायभूतो मे भवेति प्रार्थनात्मिका शरणागतिः । तन्निष्ठस्य अर्थित्वम्, उपायस्य साध्यत्वावस्थायां— अर्थित्वसामर्थ्ये इमे नियोज्यस्य विशेषणे । साध्योपाये—यागादौ स्वर्गकामनाविशिष्टत्वं अर्थित्वं ब्राह्मण्यादिसामर्थ्यमिति बोध्यम् । तथोक्तं रहस्यमञ्जर्यां श्रीभाष्ये भाष्यकारेण, वशीकरणसंततौ—

तद्वशीकरणं चापि तदीयशरणागतिः—इत्युक्तां तां च व्यवृणोद्द्वार्यशरणागतिम् । तच्छेषता प्रतीतिः स्यान्नाम तच्छरणागतिः ॥ अतोऽधिकारिणस्सम्यग्विशेषणमिति स्थितम् ॥ इति ।

प्रपत्त्यधिकारे विशेषणत्वनिष्कर्षे–अग्निविद्यादितुल्यत्वात्प्रपत्तिः परतो विधेः। विधेयान्तरत्वादप्यधिकारिविशेषणे। सर्वत्र सिद्धमेव स्यादधिकारिविशेषणम्। क्वचिद्विध्यन्तरोत्सिद्धं क्वचिच्च स्वत एव तत्। तत्राद्यमग्निविद्यादि द्वितीयं कामनादिकम्॥ इति।

ननु शरणागतेरधिकारिविशेषणत्वं न संभवति। अधिकारि-विशेषणत्वस्य निक्षेपरक्षादौ दूषितत्वादिति। मैवं वादीः निक्षेपरक्षादि-सूक्तिः अधिकारि विशेषणत्वं नाम साध्योपायान्तरनियोज्य विशेषणत्वमिति यः वदति तन्मतदूषणप्रवृत्ता। शरणागतेस्सिद्धोपाया-न्वयितावच्छेदकत्वमधिकारिविशेषणत्वमिति सिद्धान्तदूषणे न प्रवृत्ता॥

अस्मत्सिद्धान्तरीत्या हि न्यासविंशतिन्यासदशकादौ न्यासस्य साधनत्वं प्रतिपादितम्। दीपप्रकाशस्तवात्मिका शरणागतिदीपिका साध्यप्रपत्तिप्रतिपादनपरा। तत्र नित्यमिति श्लोके–निर्व्याज-निर्भरदयाभरितामिति दयाया निर्हेतुकत्वं प्रतिपादितम्। सत्ता स्थितीति श्लोके दीपप्रकाशत्वदवाप्तये त्वामव्याजसिद्धमनपायमुपाय-माहुरिति भगवतः निर्हेतुकसिद्धोपायत्व प्रतिपादितम्। मुख्यं च तत्प्रपदनं स्वयमेव साध्यम्। दातव्यमीशकृपया तदपि त्वयैवेति साध्यप्रपत्तिप्रार्थना कृता। तत्र तत्र सिद्धान्तयोजनायां न कापि हानिः। दिङ्मात्रमिह दर्शितं अधिकारिविशेषणत्वनिरूपणग्रन्थे।

अत्र यत्तावदुदाहृतं वेदान्ताचार्यसूक्तिजातं तत्सर्वं न सिद्धान्त-सिद्धं शरणागतेस्सिद्धोपायाधिकारिविशेषणत्वं निराकरोति। किं तु साध्योपायोत्तरनियोज्यविशेषणत्वमेव। तथाहि सिद्धान्ते सिद्धोपाया-धिकारो नाम–सिद्धोपायसंबन्धानुसन्धानं तद्वन्तं प्रति शरणागते-र्विशेषणत्वन्नाम व्यावर्तकत्वमेव। तथा चानुगृहीतं பரந்த ரஹஸ்ய द्वयपूर्वखण्डोत्तमपुरुषार्थकथनावसरे–

S. 14.

श्यामत्वयुवत्वादिक ஸோபாதி அதிகாரிவிசேஷணமாயிதி चरमश्लोकैकशब्दार्थकथनावसरे अधिकारि யாகில் अपेक्षितं स्वीकारं செய்கிற கார்யமேதென்னில், ऐश्वर्यार्थि யிலும் கைவல்யார்த்தியிலும் भगवच्चरणार्थि யாய் साधनानुष्ठानं பண்ணுமவனில் காட்டிலும இவ்வதிகாரியை வ்யாவ்ருத்தனாக்குகிறது भगवल्लाभार्थमான இந்த ஸ்வீகாரமாகையாலே अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति என்கிற விடத்தில் अरुणत्वपिङ्गाक्षत्वादिகள் ஸோமக்ரயத்துக்குறுப்பாக पशुवுக்கு पश्वन्तर த்தில் காட்டில் व्यावर्तकविशेषण மாமாப்போலே இதுவு मधिकारि க்கு व्यावर्तकविशेषण மாகக் கிடக்கிற दिति ॥

इदं च व्यावर्तकलक्षणं अधिकारिविशेषणत्वं वेदान्ताचार्याणा-मभिमतमेव । तैरेवोपायविभागाधिकारे இவ்வீச்வரனுடைய உபாயத்வமும் अद्वारकप्रवृत्तिनिष्ठன் பக்கல் उपायान्तरस्थान-निवेश த்தாலே विशिष्ट மாயிருக்குமிதி सिद्धोपायप्रतिसंबन्धिनः प्रपत्त्यैव विशेषितत्वादिति ॥

तत्रैव स्थलान्तरे— अस्याश्च शरणागतेः इयं केवललक्ष्मीशो-पायत्वप्रत्ययात्मिका स्वहेतुत्वधियं रुन्ध इति धर्मिस्वरूपप्रतिपत्ति-प्रतिषिद्धत्वेनोपायत्वस्यासिद्धत्वात्साध्योपायाङ्गत्वं अधिकारिविशेषणत्वं वा परिशेषात्सिध्यति । इत्थ प्रमाणोपपत्तिसंप्रदायसिद्धस्य शरणागति-तत्वस्य देवगुह्यत्वात्तद्गोपनार्थं न्यासविद्याप्रवचनाय प्रणीतेषु प्रबन्धेषु तत्र तत्र शरणागतिपरवचनानां न्यासविद्याङ्गभूतगोप्तृत्ववरणगर्भ-रक्षिष्यतीति विश्वासप्राधान्य मात्रपरत्वेनान्वारुह्यवादाः कृताः । तथा तत्र तत्र कृतानां वादानामन्यार्थत्वेनातत्परत्वज्ञापनाय तस्यैव विश्वासस्य तादृशप्राधान्यासंभवो विधेयस्य नियोज्य विशेषणत्व-खण्डनेन परमकारुणिकैराचार्यैः प्रतिबोध्यते इति तत्सूक्तिजातमन्यथा-सिद्धमेव ॥

तत्र साध्योपायशोधनाधिकारे— शरणागतिपरवचनानां भर-न्यासाङ्गविश्वासप्राधान्यपरत्वेनैषा तावदन्वारुह्यवादसूक्तिः ॥

இவ்வுபாய ஸ்வரூபத்தைப் பற்ற नारायणं सलक्ष्मीकं प्राप्तुं तच्चरणद्वयं । उपाय इति विश्वासो ह्ययार्थश्शरणागतिः । என்கிற அபியுக்தர்பாசுரம் அதிகார கோடியிலும் அங்க கோடியிலும் இருக்கிற விச்வாஸத்தினுடைய प्राधान्यं சொல்லுகைக்காக வந்ததொ. அப்படியே प्रपत्तिर्विश्वासस्सकृत्प्रार्थनामात्रेणापेक्षितं दास्यतीति विश्वासपूर्वकं प्रार्थनामिति यावत् । என்கிற वाक्य மும் प्राधान्यविवक्षै யாலே इति ॥

अत्र तावत्- भरन्यासाङ्गतया विधीयमानस्यैव विश्वासस्य तदधिकारकोटावपि स्थितिरूपं यत्प्राधान्यं तावन्मात्रपरत्वेन शरणवरणप्रधानानां प्रमाणानामन्यथासिद्धिरुक्ता । तथा च मामेकं शरणं व्रजेत्यादिविहिता या शरणागतिः सा भरन्यासाङ्गभूतरक्षिष्यतीति विश्वासात्मिकैव । तस्याश्च भरन्यासाधिकारभूतमहाविश्वासात्मकत्वमप्यस्तीति तादृशाङ्गत्वाधिकारिविशेषणत्वैतदाकारद्वयवैशिष्ट्यरूपप्राधान्यस्फोरणायैव रक्षिष्यतीति विश्वासात्मकशरणागतिरेव प्रपत्तिरिति तत्र तत्रोच्यत इत्युक्तं भवति ॥

एवं शरणागतिवचनानामन्यथानयनस्यान्वारुह्यवादतां ज्ञापयितुं शरणं व्रजेति विधीयमानाया एव शरणागतेर्भरन्यासाधिकारकोटिनिविष्टत्वं न संभवतीति तत्र तत्र निरस्यते । तत्र मामेकं शरणं व्रजेत्युक्तायाश्शरणागतेर्महाविश्वासात्मकत्वेन प्रपत्त्यधिकारिविशेषणत्वं यदुक्तं, तन्निक्षेपरक्षायां पूर्वपक्षमुखेनानूद्य दूषयति अधिकारिविशेषणतया तदुपादानमपि सप्रयोजनमङ्गीक्रियत इति चेन्न ॥

फलादिभ्यो विभिन्नत्वात्प्रपत्तिर्विध्यनन्वयात् विधेयान्तरहानेश्च नाधिकारिविशेषणमिति, तदुपादानमिति । रक्षिष्यतीति विश्वासात्मकसिद्धावस्थशरणागत्युपादानमित्यर्थः । फलादिभ्य इत्यत्रादिशब्देन फलकामनानिमित्ते संगृह्येते । प्रपत्तिः—शरणं व्रजेत्युक्त-

रक्षिष्यतीति महाविश्वास इत्यर्थः । प्रपत्तिः नाधिकारिविशेषणमिति योजनेति ॥

तत्रैव स्थलान्तरे – अत्र सर्वेश्च साध्यस्य वरणस्य निराकृतम् । साध्योपायाधिकारत्वं निगमान्तगुरूत्तमैः । निपुणैरस्मदाचार्यैर्नेदमभ्युपगम्यते । सिद्धोपायाधिकारत्वं यत्तैरुद्घुष्यतेतरां । सिद्धमेव हि सर्वत्र नियोज्यस्य विशेषणम् । इत्येव नियमो हि स्यात्साध्योपायैकगोचरः । नियोज्यस्य च कार्यं यः स्वक्रियत्वेन बुध्यति ॥ सिद्धोपाये स नास्त्येव कथ्येष्येत विशेषणम् । त्वमेवोपायभूतो म इति वै योऽध्यवस्यति । सिद्धोपायेन संबन्धं सोऽधिकार्यस्य गीयते ॥ साध्योपायाधिकारिभ्यस्सिद्धोपायाधिकारिणः । व्यावर्तकत्वाद्वरणमधिकारिविशेषणम् । कर्मण्यैश्वर्यबोधो हि तत्र तेषामधिक्रिया ॥ पारतन्त्र्योचिता सात्र याच्ञा पर्यवसायिनी । फलोपहितवेषेण सिद्धोपायार्थना धियः ॥ अर्थित्वान्तर्गतत्वेनाप्यधिकारित्वमक्षतम् । सामर्थ्यमितरत्यागो ब्रह्मास्त्रसदृशेऽत्र हि ॥ अर्थित्वं वरणं तस्माद्विशिष्टस्याधिकारता । सिद्धानामिव साध्येषु साध्यानां सिद्धसाधने ॥ तदौचित्यपरामर्शादधिकारत्व मिष्यताम् ॥ स्वरूपनिष्ठमित्यार्यैः सिद्धत्वं चास्य दर्शितम् । क्षीरपानविधिन्यायाद्विधिरप्यत्र योजिता ॥ तस्मात्त्रय्यन्तगुरुभिः साध्योपायाधिकारता । निजान्वारुह्यवादोक्ता वरणस्य निवार्यते ॥ यथान्वारुह्य वदता शालिसत्र नयादिकम् । प्रवर्तितं जैमिनिना तथालेति विभाव्यताम् ॥ इति ।

प्रपत्तेरधिकारिविशेषणत्वसमर्थनग्रन्थे– न च, तस्याः अधिकारिविशेषणत्वासंभवः । फलादिरूपत्वाभावात् । तदुक्तं– फलादिभ्यो विभिन्नत्वात्प्रपत्तिर्विध्यनन्वयात् । विधेयान्तरयानेश्च नाधिकारिविशेषणमितीति वाच्यम् । फलादिभ्योऽप्यभिन्नत्वात्प्रपत्तिर्विधितोन्वयात् । विधेयान्तरसत्त्वादप्यधिकारिविशेषणमिति । तत्प्रतिष्ठापनसंभवात् ॥

तथाहि – प्रपत्तेरधिकारिविशेषणता हि फलकामनारूपतया फलतया निमित्ततया स्यात् । तत्राद्ये, त्वमेवोपायभूतो मे भवेति प्रार्थनामतिश्शरणागतिरिति शरणागतेस्सिद्धोपायफलोपधानप्रार्थना-रूपत्वसिद्ध्या, तत्फलोपधानस्य च योग्यतावस्थसिद्धोपायफलत्वस्य दुरपह्नवतया तत्प्रार्थनायाः तत्फलकामनारूपत्वानपायेन तेन रूपेण तदधिकारिविशेषणत्वोपपत्तिः । अथ द्वितीयेऽपि यथावस्थितपारमार्थिक-भगवच्चरणारविन्दशरणागतेर्भगवदेकशरणत्वरूप स्वरूपाविर्भावात्मक-त्वेनानवरतभोग्यफलात्मकतायाः अपि द्वयपूर्वखण्डक्रियावर्तमानप्रत्य-यादिसिद्धत्वेन दुरपह्नवतया तेन रूपेण तत्तथात्वोपपत्तिः । न च फलस्य स्वरूपेण विशेषणत्वासंभवः । स्वविषयककामनावत्वसंबन्धेन तस्यापि विशेषणत्वोपपत्तेः ॥

अथ तृतीयेऽपि प्रपत्तेर्निमित्ततयाधिकारिविशेषणत्वं हि निषिद्धतया केवलतया च स्यात् । तत्राद्ये– கலங்கி उपायबुद्ध्या பண்ணும் प्रपत्ति யும் பாதகந்தோடொக்கு मित्यनुगृहीत-रीत्या प्रपत्तिविशेषस्य निषिद्धनिमित्तान्तर्गततायाः अपि सर्वपापशब्द-सिद्धत्वेन दुरपह्नवतया तेन रूपेण तत्तथात्वोपपत्तिः । न चैवं प्रपत्तेः परिहरणीयताप्रसङ्गः । तेन रूपेण तत्तथात्वस्येष्टत्वात् । अथ तत्र द्वितीयेऽपि– जगति गतिमन्यामविदुषां गतिर्गम्यश्चासौ हरि-रित्यनुगृहीतरीत्या अनन्यशरणत्वाविर्भावात्मिकायाः प्रपत्तेः केवल-निमित्ततया सिद्धोपायाधिकारिविशेषणतया जितन्तादिसिद्धत्वेन दुरपह्नवतया तेन रूपेण तत्तथात्वोपपत्तिः ॥

एवं स्वातन्त्र्यं निजरक्षणमित्याद्यनुगृहीतरीत्या सर्वेषां चेतनानां भगवदन्यारक्षकत्वात्मकानन्यशरणत्वरूपस्वरूपस्य तादृशस्वरूप-विशिष्टसर्वचेतनविषयेऽपि भगवत एव रक्षणप्राप्तेश्चाष्टाक्षरनमःपदादि-

सिद्धतया दुरवह्नुवत्त्वेन सिद्धरूपशरणागतेरपि केवलनिमित्ततया सिद्धोपायाधिकारिविशेषणत्वोपपत्तिः ॥

न चात्र विधिप्रत्ययप्रयोगः परिपन्थीति वाच्यम् । विकल्पासहत्वात् । किं सिद्धरूपायाश्शरणागतेः केवलनिमित्तत्वे विधिप्रत्ययप्रयोगविरोधः प्रतिपिपादयिषितः उत साध्यरूपायास्तस्यास्तथात्वे वा । न तावदाद्यः, तद्विषयविधिप्रत्ययस्यैव गगनकुसुमसमत्वात् ॥

नापि द्वितीयः तस्यापि विकल्पासहत्वात् । किं तदधिकारिविशेषणत्वग्राहकवाक्यान्तर्गतविधिप्रत्ययप्रयोगविरोधः प्रतिपिपादयिषितः, उत वाक्यान्तरगततद्विरोधो वा ? न तावदाद्यः । अहं त्वेत्यादिवाक्ये विधिप्रत्ययाश्रवणात् । नापि द्वितीयः, परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायादित्यादिषु वाक्यान्तरविहिताया एव गुरूपसत्यादेर्वाक्यान्तरे अधिकारिविशेषणत्वेनाप्युपपादनदर्शनेन वाक्यान्तरीयविधिप्रत्ययप्रयोगस्य, वाक्यान्तरोपात्ताधिकारिविशेषणत्वेन साकमविरोधदर्शनात् । अभ्युपगतं चाचार्यैः । वाक्यान्तरविहितायाः प्रपत्तेरेव प्रपन्नासाधारणधर्मद्वयस्मरणादिविधिषु केवलनिमित्ततयाधिकारिविशेषणत्वमपि । तस्मात्सिद्धम् – फलकामनारूपतया फलतया निमित्ततया च प्रपत्तेरधिकारिविशेषणत्वमुपपद्यत एवेति ॥

न चैवमपि विधेयान्तरासिद्ध्या तत्तथात्वासंभवशङ्का अधिकारिविशेषणानां नियोज्यतावच्छेदकत्वनियमे प्रमाणाभावात् । न च प्रायोदर्शनमात्रेण तत्सिद्धिः । पार्थिवत्वलोहलेख्यत्वयोर्वज्रमणौ व्यभिचारात् ॥

अधिकारिविशेषणानां नियोज्यतावच्छेदकत्वं न तावदधिकारिविशेषणताप्रयुक्तम् । किंतु उपायान्तरकार्यायत्तसिद्धत्वरूपोपाधि-

निबन्धनम् । अतो यत्रोपायस्य सिद्धत्वं, तत्र तदधिकारिविशेषणस्य-नियोज्यतावच्छेदकत्वाभावो न क्षतिमावहतीति युक्तम् । विधेयान्तराभावेऽपि सिद्धोपायाधिकारिविशेषणत्वम् ॥

ननु किं तर्हि सर्वाधिकारिविशेषणसाधारणमधिकारिविशेषणत्वन्नाम इति चेत् । उपायान्तरान्वयितावच्छेदकत्वमेवेति ब्रूमः । सिद्धं च प्रपत्तेः सिद्धोपायान्वयितावच्छेदकत्वं — சரணமாகுந்தன் தாளடைந்தார்க்கெல்லாமி त्यादिदिव्यसूरिसूक्तिभिः । तस्मान्न विधेयान्तरासिद्धावपि प्रपत्तेरधिकारिविशेषणत्वविरोधः । अथ यद्वा स्यान्नामाधिकारिविशेषणानां नियोज्यतावच्छेदकत्वनियमोऽपि । तथापि न प्रपत्तेरधिकारिविशेषणत्वहानिः । प्रपन्नं प्रति सिद्धोपायस्यैव विधीयमानत्वात् विधेयत्वासंभवः । तस्योत्पाद्यत्वलक्षणसाध्यत्वासंभवेऽपि प्राप्यत्वलक्षणसाध्यत्वानपायेन तत्साध्यकविध्युपपत्तेरिति ॥

तदेवम्, सिद्धान्तसिद्धस्य शरणागत्यधिकारिविशेषणत्वस्य प्रामाणिकैर्दुरपह्नवत्वात् श्रीमन्निगमान्तसूरिसूक्तिर्नियोज्य विशेषणत्वमात्रविषयैवेति सुधीभिर्मन्तव्यम् । अतः फलादिभ्योऽप्यनन्यत्वात्प्रपत्तिर्विधिनोऽन्वयात् । विधेयान्तरसत्वादप्यधिकारिविशेषणमिति सिद्धम् । विस्तरस्तु — श्रीवचनभूषणमीमांसाभाष्ये पूर्वोक्तग्रन्थादौ द्रष्टव्यः ॥

भक्तिः आवृत्तिरसकृदुपदेशादित्यादिना असकृदावृत्ता प्रपत्तिः सकृदेव हि शास्त्रार्थः, सकृदेव प्रपन्नायेत्यादिप्रमाणात् । सकृत्कर्तव्या, अधिकारिविशेषणीभूतप्रपत्तेः न कर्माद्यपेक्षा । सर्वधर्मान्परित्यज्य, त्यज धर्ममधर्मं च, उद्धवोत्सृज्य चोदनां प्रति चोदनामित्यादौ स्वरूपविरुद्धकर्मादित्यागविधानात् । तथैव पूर्वाचार्यैरनुगृहीतं शिष्टभूषणे —

अत्रैषा रामानुजार्याणां प्रक्रिया बोध्या — पञ्चमहायज्ञादीनां विद्याङ्गत्वमाश्रमाङ्गत्वं चेत्याकारद्वयमस्ति । तत्रोपासकानां विद्याङ्गत्वाकारः, अमुमुक्षूणामाश्रमाङ्गत्वाकारः । अत्र विद्याङ्गत्वाकारः सर्वापेक्षा च यज्ञादिश्रुतेरिति सूत्रभाषितः । आश्रमाङ्गत्वाकारः विहितत्वाच्चाश्रमकर्मापीति सूत्रभाषितः ॥

प्रपन्नविषये तु, विद्याया निष्पन्नत्वात् उपासक इव पञ्चमहायज्ञादीनां विद्याङ्गत्वमपि न संभवति । निष्पन्नविद्यामाहात्म्यादेवानुष्ठितानामप्याश्रमधर्माणां इतरस्याप्येवमसंश्लेषः इत्यादिभिरश्लेषवचनेनानिच्छतोननुष्ठानमेवेति केवलाश्रमाङ्गत्वमपि न संभवतीति । अग्निहोत्रादित्विति सूत्रपूर्वपक्षे भाषितं — तच्च सिद्धान्तेऽप्यङ्गीकृतमेवेति भावटिप्पण्याम् —

न देवभूतात्मनृणामित्यादिरीत्या सर्वात्मना भगवच्छरणागत्या देवतान्तर ऋणत्रयापाकरणात् । "तमंशेनैव कुर्वीत मनीषी पूर्वराशिवदिति,' प्रपन्नान्प्रति प्रायश्चित्तान्तराणां निषिद्धत्वात् अहिंसन्नन्यत्र तीर्थेभ्यः, यज्ञार्थात्कर्मणोऽन्यत्रेति भगवत्कैङ्कर्ये प्रत्यवायाप्रसक्तेः . प्रपन्नानां मुमुक्षुत्वेन विहितत्वाच्चाश्रमकर्मापीत्यमुमुक्षुविषयन्यायस्यात्रानवतारात् । प्रपन्नानां निष्पन्नविद्यत्वेन "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्, अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ।" इत्युक्तन्याययोः निष्पाद्यविद्याविषययोरत्रानवतारात् ॥

सर्वधर्मान्परित्यज्य — त्यज धर्ममधर्मं चेति प्रपित्सून्प्रति सर्वकर्मत्यागविधानात् । गणवत्कब्रह्मास्त्रन्यायेन साधनान्तरस्य, सिद्धोपायनिष्ठान्प्रति अवश्यपरिहरणीयत्वात् । निष्पन्नविद्यानां पुण्यपापाश्लेषवचनेनानुष्ठितानामपि निष्फलत्वात् । मनीषी वैदिकाचारमित्यादि विशेषविधीनां स्वरूपानुरूपकैङ्कर्यमात्रविषयत्वाच्च पञ्चयज्ञान् मुञ्चन्त इति यावत् इति ॥

सद्दर्शनसुदर्शने —

सन्न्यासो द्विविधः प्रमाणगदितः सद्ज्ञानकर्मात्मना
तत्र ज्ञानपथं व्रजन् हि पुरुषः श्रेष्ठो यतीनां शतात् ।
श्राद्धाद्यं बत कर्म कर्मयतिना सद्यस्तु संत्यज्यते
विद्यान्यासव्रतां सतां पितृविधित्रातस्य का वा कथा ॥

किं च

"यज्ञोऽपि द्विविधः त्रयीषु विहितस्वज्ञानकर्मात्मना
सर्वं कर्म जहाति कर्मयजने दीक्षां भजन्वै पुमान् ।
यावज्जीवनमात्मबुद्धियजने दीक्षां भजन्तो बुधा
मुञ्चन्तोऽन्यदनन्तमात्मयजनेनाश्नन्ति यज्ञात्मकाः" ॥ इति ।

ननु प्रपन्नैः संध्यावन्दनकर्मानुष्ठीयते भवदुक्तरीत्या तन्न संगच्छत इति चेन्न– उपासकानुष्ठेयकर्मापेक्षया प्रपन्नानुष्ठेयकर्मणः कैङ्कर्यरूपत्वेन भिन्नत्वात् ॥

तथाहि – कर्मस्वरूपभेदः पूर्वमीमांसायां – कुण्डपायिनामग्निहोत्रन्यायेन, विनियोगपृथक्त्वन्यायेन च संभवति । विनियोगः शेषत्वफलं–तस्य पृथक्त्वं पार्थक्यमित्यर्थः । कर्मण एकत्वेऽपि फलभेदात् स्वरूपभेद इति यावत् । अमुमुक्षोः कर्मणामाश्रमार्थतयाऽनुष्ठानम् । उपासकस्य विद्यानिष्पत्तये तदनुष्ठानं । कैङ्कर्यभक्तिनिष्ठस्य पौष्कल्यार्थं कैङ्कर्यत्वेन तदनुष्ठानं फलप्रपत्तिनिष्ठस्य निष्पन्नविद्यत्वेन किं कुर्यादिति कैङ्कर्यत्वेन तदनुष्ठानम् । प्रपन्नानुष्ठितकर्मणां स्वरूपभेदः ॥

पूर्वमीमांसोक्तद्वादशाहकर्मविशेषस्य सङ्कल्पभेदकृतसत्रत्वाहीनत्वभेदवत् अस्त्येव । सत्रं अनेककर्तृकैककर्म, अहीनम् एककर्तृककर्म । कर्मणः किं कुर्यादिति विशेषविधेर्बलात्कैङ्कर्यत्वम् । अलौकिकत्वे

सति, बलवदनिष्टाननुबन्धित्वविशिष्टश्रेयस्साधनत्वरूपं धर्मत्वं यस्य तं प्रति तस्य धर्मत्वं, न तु जातिः, आपेक्षिकं किं कुर्यादिति विशेषविधेः ॥

कैङ्कर्यमिति निश्चित्य देवस्य परमेष्ठिनः ।
वेदस्मृत्युक्तमखिलं कृत्यं कुर्यादनन्यधीः ॥

इति वासिष्ठसंहिता तृतीयाध्यायवचनात् ॥

परमात्मा हरिः स्वामी स्वतोऽहं तस्य किङ्करः ।
कैङ्कर्यमखिलावृत्तिरित्येष ज्ञानसंग्रहः ॥

इति भरद्वाजपरिशिष्टवचनाच्च । कैङ्कर्ये मुख्यवृत्तो धर्मशब्दः, तस्मादन्यत्र तद्गुणलेशयोगादौपचारिकः । धर्मेण पापमपनुदतीत्यत्र श्रुतप्रकाशिकायाम्—अनभिसंहितफलस्य धर्मत्वं अन्यस्य पापत्वमुक्तम् । अत्र पूर्वमीमांसोक्तसंयोगपृथक्त्वन्यायेनाप्युपपत्तिः । दध्यादि तु उभयरूपम्, दध्ना जुहुयादिति फलासंयुक्तेन वाक्येन क्रत्वर्थत्वात् । दध्नेन्द्रियकामस्य जुहुयादिति अनेन फलाय विधानात् पुरुषार्थत्वात् । तदुक्तं एकस्य तूभयरूपत्वे संयोगपृथक्त्वमिति । संयोगो वाक्यम् । तस्य पृथक्त्वं भेदः । एकस्योभयार्थत्वे नियामक इत्यर्थः । इति संयोगपृथक्त्वन्यायः । पूर्वमीमांसायां शाखान्तराधिकरणे शाखान्तरे कर्मभेद इति सूत्रेण पूर्वपक्षमुक्त्वा, एकं वा संयोगरूपचोदनाख्याविशेषादिति सिद्धान्तितम् । तन्न्यायेन च शरणवरणाधिकार्यनुष्ठितकर्मणः आकारभेदात् फलसंयोगस्वरूपनामधेयचोदनाभेदात् भेदः वर्तते ॥

तथाहि— उपासकस्य सन्ध्यावन्दनाद्यनुष्ठानं प्रत्यवायपरिहारार्थं त्रिभिर्ऋणवा जायते इत्युक्तरीत्या ऋणित्वात् शरणवरणाधिकारिणस्तदनुष्ठानं भगवन्मुखोल्लासार्थम् । न किङ्करो नायमृणीत्यादिना

ऋणत्रयादिनिषेधात् । अयथावस्थितस्य उपासितानुष्ठितकर्मणः प्रत्य-वायपरिहारः फलम् । यथावस्थितस्य प्रपन्नानुष्ठितकर्मणः भगव-न्मुखोल्लासः फलं । उपासकानुष्ठितकर्मणः अभिसंहितफलकत्वं स्वरूपं फलजनकमित्यर्थः । प्रपन्नानुष्ठितकर्मणः अनभिसंहितफलकत्वं स्वरूपमिति । उपासकानुष्ठितकर्मणः तत्तत्कर्मनामधेयं आख्या । प्रपन्नानुष्ठितकर्मणः कैङ्कर्यं नामधेये । उपासकानुष्ठितकर्मणः यजेत उपासीतेति चोदना । प्रपन्नानुष्ठितकर्मणः किं कुर्यादिति चोदना कैङ्कर्यं कुर्यादित्यर्थः । अतः तयोर्भेदस्सिद्धः । उभयानुष्ठितकर्मणोः संज्ञाया अभेदेऽपि कर्मान्तरत्वमेव संज्ञातश्चेदिति सूत्रन्यायात् । पूर्वोक्तं सर्वं दासकृतहरिदिनकृत्यविवेक चरमश्लोकचन्द्रिका सिद्ध-तात्पर्यटिप्पणी गीतान्तस्थतत्वप्रकाशिका ग्रन्थादौ सम्यक् द्रष्टव्यम् ॥

शरणवरणाधिकारिणः सन्ध्यावन्दनादिकर्मणां ईश्वरोक्तत्वेन रागतः कर्तव्यत्वम्, न तु वैधत्वेन । स्वार्थानुभवकैङ्कर्यपराणान्तु वैधत्वेन कर्मादिप्रवृत्तिः । आचार्यहृदये– विधिरा கழிகள் इत्यनु-गृहीतत्वात् । श्रीपाञ्चराले– अङ्गन्यासकरन्यासाद्यङ्गविशिष्टाराधनरूप-कैङ्कर्यवत् मुख्याङ्गविशिष्टमन्त्रोच्चारणपूर्वकाज्ञाकैङ्कर्यरूपं कर्म प्रपन्नैः क्रियते । आज्ञाकैङ्कर्यरूपं कर्म सन्ध्यावन्दनादि अकरणे प्रत्यवाय-जनकम् । अनुज्ञाकैङ्कर्यरूपं कर्म यज्ञादि करणे अभ्युदयजनकम् । उपासकानामावश्यकम् । तर्हि ईश्वरस्यैव कर्तृत्वभोक्तृत्वाङ्गीकारे सिद्धोपायनिष्ठैः करिष्यामीति संकल्पः क्रियतां– नतु करिष्ये इति । फलस्य कर्तृगामित्वे करिष्ये इति आत्मनेपदप्रयोगस्य, फलस्य अन्यगामित्वे करिष्यामीति परस्मैपदप्रयोगस्य च – 'स्वरितञितः कर्त्रभिप्राये क्रियाफले, 'शेषात्कर्तरि परस्मैपदमिति' शब्दानु-शासनसिद्धत्वादिति चेत्–

अत्रायं निर्णयः । साधारण्येनाधिकारिणं प्रति शब्दशास्त्रे तथोक्तत्वात् । भगवद्गीतायाम्—

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ।। कर्मणैव हि संसिद्धिमास्थिता जनकादयः । लोकसंग्रहमेवात्र संपश्यन्कर्तुमर्हसि ।। न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन । नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ।। यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः । मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ।। उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् । सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ।। सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत । कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम् । इत्यादिभिर्लोकसंग्रहार्थं, यथा जनाः यादृशकर्मानुष्ठानेन शास्त्रानुष्ठानं तद्विषयविश्वासं च कुर्वीरन्, तथा कुरु इति गीताचार्येण पार्थं प्रति उपदिष्टत्वात् । आज्ञाच्छेदी मम द्रोहीति तदकरणे प्रत्यवायश्रवणात् । तादृशशास्त्रोक्तरीत्यैव कर्तव्यमिति तदनुतिष्ठन्ति शिष्टाः अतः अज्ञप्रपन्नैः अस्मदादिभिः नित्यनैमित्तिकरूपं कर्म कैङ्कर्यरूपत्वेन रागतः अनुष्ठेयमेव ।।

श्रीवचनभूषणदिव्यशास्त्रे प्रथमप्रकरणे — स्वयत्ननिवृत्तिपारतन्त्र्यफलम्, स्वप्रयोजननिवृत्तिशेषत्वफलम्, परप्रयोजनप्रवृत्तिप्रयत्नफलं, तद्विषयप्रीतिचैतन्यफलमिति । ஆயிபடி व्याख्यानग्रन्थे— परप्रयोजनप्रवृत्तिप्रयत्नफलमिति वाक्यव्याख्यानावसरे— இந்த பாரதந்திரிய ஜ்ஞானம் பிறந்தபின்னு மிவனுக்குண்டாம் ஸ்வபத்நங்களில்– स्वप्रयोजनमिल்லை என்கிறது. மேல் परप्रयोजनमित्यादि யால், இந்த நிவ்ருத்யதிகாரிக்கு அவச்யகரணீயங்களான ऊर्ध्वपुण्ड्रधारण, द्वयोच्चारणमालाकरणदीपारोपणादिशिष्टाचाररूपस्वप्रयत्न ந்துக்கு फलं प्रयत्नविषयभूत னுமாய் प्रेरकनுமான பரனுக்கு ப்ரீதிவர்த்தகமாய்க்கொண்டு तत्प्रयोजन

மான ப்ரவ்ருத்திவிசேஷமா யிருக்குமத்தனை - அது ஸ்வப்ரயோஜனப்ரவ்ருத்தி-யாகாமையால் பாரதந்த்ர்யவிரோதி யாகாதிதி.

அத்ர பூர்வாசார்ய ஶ்ரீஸூக்தி: — இதம் ஶரணமஜ்ஞாநாம் । அஜ்ஞஸர்வஜ்ஞ-பக்தாநாம் அவிகாத: இத்யாதி களில் சொல்லுகிறபடியே அஜ்ஞ ரென்றும், ஜ்ஞாநாதிக ரென்றும், பக்திபரவஶ ரென்றும் ப்ரபந்நா-திகாரிகள் மூன்றுபடியா யிருப்பார்கள். இதில் அஜ்ஞராகிறார். ஸ்வஸ்வரூபாதிஸாக்ஷாத்கார மும் தத்விபாகரூபபக்த்யாதி களுமின்றிக்கே ஸம்ஸாரிகளோடொக்க ஆண்டாறு மாஸத்துக்கு ஜீவனந் தேடி அந்நபாநாதிதாரகரா யிருநிற்கச்செய்தே. ஸதாசார்யபரம்பராப்ராப்தமான ஔபதேஶிகஜ்ஞாநத்தாலே ஆசார்யபரதந்த்ர ராய் வகுத்த விஷயத்தில், சரணம் புகுந்து பூர்வாசாரத்தை யண்டைகொண்டு வர்த்திக்கும் அஸ்மதாதிகள். இவர்கள் கன்றுமேய்த்தினிதுகக்கும் ஈச்வரனுடைய வாத்ஸல்யா திசயத்துக்கு இலக்கான வாகாரத்தாலே லோகவிலக்ஷ ணார்களாயிருந்தார்களேயாகிலும். இவ்வைலக்ஷண்யம விசேஷஜ்ஞதுர்ஜ்ஞேய மாகையாலே ஸர்வர்க்குமிவர்களிடத்தில் ஸ்வஸஜாதீயதாபுத்தியே நடவாநிற்கும். ஆகையாலிவர்களில் வைலக்ஷண்யமடியாக மர்யாதாதிலங்கநம் பண்ணவொண்ணாது இவர்கள் மர்யாதாதிலங்கனம் பண்ணில் இவர்கள் திறத்தில் ஸஜாத்யபுத்தியுடைய ஸர்வலோகங்களுமிவர் களுடைய அநுஷ்டானத்தை பரிக்ரஹித்துமிவர்களை நிந்தித்தும் நசிக்கையாலுண்டான பகவதப்ரீதியாலே மத்பக்தோऽபி ந வைஷ்ணவ: என்கிறபடியே இவர்களுக்கு பகவ-த்விஷயத்திலுண்டான ப்ரேமமும் அகிஞ்சித்கரமாய் வைஷ்ண வத்வமும் நசிக்கு. 'லங்கயந்' ஶூலமாரோஹேத் என்கிறபடியே யமோ வைவஸ்வதோ ராஜா, வென்கிற ஸாக்ஷாத்யமன் தானே. முகம் மாறவைக்கையாகிற ॒ததப்ராப்திமஹாது:கரூப மஹாபாதகாநுபாவாத்ம-ஶூலாரோபணமும் பலித்து விடுமத்தனையிதி.

तथोक्तं स्मृत्यन्तरे– वैदिकैः कर्मभिः पुण्यैर्निषेकाद्यैर्द्विजन्मनां । कार्यश्शरीरसंस्कारः पावनः प्रेत्य चेह चेति ॥ पराशरसंहितायां विशिष्टपरमधर्मशास्त्रे प्रथमेऽध्याये भगवद्वचनम्–प्रपन्नः परमैकान्ती सर्वदा कमलासन । निषेकादिक्रियास्सर्वाः वैष्णवश्रुतिमार्गतः ॥ सदा स ब्रह्ममेधान्तं कुर्यादेव न संशयः ॥ इति । वासिष्ठसंहितायाम्– प्रीत्यर्थं देवदेवस्य श्रीशस्य जगतीपतेः । नित्यकर्माणि कुर्वीत तथा नैमित्तिकान्यपि ॥ इति । तत्वशेखररहस्ये – लैंगे– विष्णुभक्तिसमायुक्तान् श्रौतस्मार्तप्रवर्तकान् । प्रियो भवति यो दृष्ट्वा वैष्णवोऽसौ प्रकीर्तितः ॥ इति ।

पूर्विकाह्निकग्रन्थे – स्वयत्नसाध्यैस्सुकृतैरफलाकाङ्क्षिणामपि । ऋषीणामुदितं ज्ञानं नात्यन्तविशदं भवेत् ॥ भक्तिनिष्ठाः परे श्रेष्ठाः पराशरशुकादयः । जानन्ति भगवत्तत्वमञ्जसा तदनुग्रहात् ॥ निर्हेतुकेन श्रीशस्य प्रसादेनैव भूयसा । अर्थपञ्चकयाथात्म्यं पश्यन्त्यन्ये हि मुक्तवत् ॥ स्नानदानतपस्तीर्थहोमनामजपार्चनम् । फलार्थिभिः कृतं सर्वं न विज्ञानाय कल्पते ॥ इति । कर्मानुष्ठानविषये विस्तरस्तु, दासकृततर्पणतत्त्वसारग्रन्थे द्रष्टव्यः । तथा च– परार्थपरप्रपन्नानां यद्यदावश्यकम्, तदेव कर्तव्यं न त्वन्यत्काम्यादिकमिति सिद्धम् । अतः प्रकृते सर्वदा पवित्रधारणमनावश्यकमेव ॥

इति श्रीसदनुष्ठानदर्पणे सदा पवित्रधारणानावश्यकत्वविषयो नाम
तृतीयप्रतिफलनम् ॥

---

# ॥ तुरीयप्रतिफलनम् ॥

सर्वकर्मस्वपि सङ्कल्पानावश्यकत्वविषये प्रमाणम् –

प्रपन्नानां सर्वकर्मस्वपि सङ्कल्पः अनावश्यकः केषांचित्स्नानादिकर्मणां संकल्पः अनावश्यकः । केषांचित्कर्मणामावश्यकः, वचनात्, शिष्टाचाराच्च । तथाहि पाराशरे– प्रातरुत्थाय सततं शौचं कृत्वा यथाविधि । प्रक्षाल्य पादौ हस्तौ च पश्चादाचमनं चरेत् ॥ ततः स्नानं प्रकुर्वीत दन्तधावनपूर्वकम् ॥ इति । विश्वामित्रस्मृतौ– उषःकाले समुत्थाय शौचं कृत्वा विधानतः । दन्तकाष्ठमथाचम्य पर्ववर्जमतन्द्रितः । कृतस्नानो जपेत्तावद्यावदादित्यदर्शनम् ॥ इति ।

श्रीमद्वरवरमुनिप्रणीतसंस्कृताराधनक्रमग्रन्थे – प्रातः स्नात्वा नित्यकर्म कृत्वा पादद्वयं करौ । प्रक्षाळ्याचम्य पुरतो विष्णोर्गुरुपरंपराम् ॥ इति । इत्यादौ स्नानात्पूर्वं सङ्कल्पो नोक्तः ॥

अधिकारिभेदेन संकल्पावश्यकत्वादिः प्रदर्शितः सच्चरित्रपरित्राणे गर्गः – श्रुतिस्मृतिषु यत्कर्म चोदितं विधिशासनात् । प्राणानायम्य संकल्प्य कुर्यात्तत्कर्म आदरात् ॥ इति । मनुः – प्रक्षाळ्य पादौ हस्तौ च आचान्तो वाग्यतः शुचिः । तिथिवारादिकं स्मृत्वा सुसङ्कल्प्य यथाविधि ॥ इति । भरद्वाजः – सदर्भहस्तौ जानूर्ध्वे दक्षिण दक्षिणोत्तरे । कृत्वा निधाय कर्तव्यमेतत्कर्म करोति यत् ॥ स्वमानसेन स्मरणं तत्संकल्प इति स्मृतः । एवं संकल्प्य विधिना ततः स्नानं समाचरेत् ॥ इति ।

भरद्वाजसंहितायान्तु – मन्यन्ते च स्वकीयान्न स्वप्रीत्यै स्वोचितां स्वयम् । नाथः स्वकीयसेवान्तां वृत्तिं कारयतीति वै ॥ इति ।

अत्र च मन्त्राद्युक्ततिथिवारादि स्मरणदक्षिणजानूर्ध्वहस्तद्वय-निधानादिपूर्वकसङ्कल्पस्य भरद्वाजसंहितोक्तस्य नाथः स्वकीयं मां स्वप्रीत्यै स्वयमेव स्वकीयसेवां स्वोचितां कारयतीति मननात्मकस्य च संकल्पस्य प्रपन्नविषये विकल्पः । स च व्यवस्थितः । तत्र विवाहोपनयनादिषु पैतृकादिषु च तिथिवारादिकीर्तनपूर्वकस्सङ्कल्पः । अभिगमनादिषु पञ्चसु, तिथिवारकीर्तनादिविरहितः कृतं च करिष्यामीत्यादिकसङ्कल्पः । देवर्षिपितृतर्पणसंध्यावन्दनब्रह्मयज्ञादिषु तिथिवारकीर्तनादिकं विना कैङ्कर्यमखिला वृत्तिरिति भरद्वाजोक्तरीत्या श्रीभगवदाज्ञाकैङ्कर्यं देवर्षिपितृतर्पणं करिष्ये इत्यादिसंकल्पः ॥

यद्यपि आनुकूल्यस्य संकल्पः यावज्जीवं विहितकर्मानुष्ठान-सङ्कल्परूपः प्रागेवानुष्ठितः ॥ तत एव प्रपन्नस्य नित्यकर्मसु सङ्कल्पः पृथक् पृथक् नापेक्षितः । अत एव च नित्यस्नानादिषु शिष्टाः संकल्पं नानुतिष्ठन्ति । तथापि शिष्टाचारानुरोधात् वैकल्पिकं संकल्पानुष्ठानं कर्मसु उपपन्नम् । मन्त्रादिभिः सङ्कल्पविशेषस्य नैयत्यवचनं प्रपन्नेतरविषयम् । प्रपन्नविषये तु सङ्कल्पस्तत्प्रकारभेदश्च वैकल्पिकः । न च सकलाङ्गोपसंहारे काम्यं कर्म प्रसिध्यतीति अङ्गोपसंहारन्यायश्शङ्क्यः । कर्तव्यकर्मस्मरणरूपसङ्कल्पस्य नाथ-स्वकीयसेवामित्यादिरूपसङ्कल्पस्य च स्वरूपभेदेन तन्न्यायानवतारात् । निबन्धनकारैश्च स्नानादिसङ्कल्पेषु भगवानेवेत्यादेरभिगमनादिसङ्क-ल्पेषु तिथिवारस्मरणादेश्चालेखनात् । अतो यथाशिष्टाचारं क्वचित्सङ्कल्पः, क्वचित्तदभावश्चोपपन्नः ॥

तत्र येषु कर्मसु सङ्कल्पो नानुष्ठीयते शिष्टैः, तेषु प्रपत्त्यनुष्ठानकाले पूर्वमेवानुष्ठितो यावज्जीवं विहितकर्मानुष्ठानसङ्कल्पः इदानीं प्रसङ्गात् उपकरोति येषु कर्मस्वत्र यादृशोऽनुष्ठीयते सोऽपि तेषु अभ्युच्चयतया उपकरोति इति ॥

अत्रेदमवधेयं आनुकूल्यस्य सङ्कल्पादीनां व्रीह्यवघातस्वेद-न्यायेन संभावितस्वभावत्वम् । श्रीभाष्यकारप्रणीतनित्याराधनानुष्ठाने प्रपन्नं प्रत्युक्तसङ्कल्पविशेषः श्रीमद्वरवरमुनिप्रणीताराधनाक्रमानुष्ठाने तद्ग्रन्थानुक्तत्वेन सङ्कल्पविरहश्चेति विवेकः । इदानीं श्रीमद्वरवरमुनि-प्रणीताराधनाक्रमोपदेशः सार्वत्रिकः इति । अतः प्रपन्नानां सङ्कल्पः अनावश्यक एव ॥

इति श्रीसदनुष्ठानदर्पणे सर्वकर्मसु सङ्कल्पानावश्यकत्वविषयो नाम
तुरीयं प्रतिफलनम् ॥

---

## ॥ पञ्चमप्रतिफलनम् ॥

---

प्रातःस्नानादिकर्तव्यत्वविषये प्रमाणम् –

प्रपन्नैर्भगवद्भागवताचार्यकैङ्कर्योपयोगार्थं प्रातस्स्नानादिकं कार्यं, वचनात्, शिष्टाचाराच्च । तथाहि दक्षस्मृतौ– उषःकाले तु संप्राप्ते शौचं कृत्वा यथार्हवत् । ततः स्नानं प्रकुर्वीत दन्तधावनपूर्वकम् ॥ अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः । स्रवत्येव दिवारात्रं प्रातःस्नानं विशोधनम् ॥ क्लिद्यन्ति हि प्रसुप्तस्य इन्द्रियाणि क्षरन्ति च । अङ्गानि समतां गच्छन्ति उत्तमान्यधमैस्सह ॥ गुणा दश स्नानपरस्य साधो रूपं च तेजश्च बलं च शौचम् । आयुष्यमारोग्यमलो-लुपत्वं दुःस्वप्ननाशं च मतिश्च मेधा ॥ सन्ध्यास्नानं प्रभाते च मध्याह्ने च ततः पुनः । इत्यादि । सिद्धोपायनिष्ठैः प्रपन्नैः देवतान्तर उपायान्तरसंबन्धभीत्या ब्रह्मास्त्रशणवल्कलन्यायेन सिद्धोपायप्रच्युति-भीत्या च ॥

मनुः—यमो वैवस्वतो राजा यस्तवैष हृदि स्थितः । तेन चेदविवादस्ते मा गङ्गां मा कुरून् गमः ।। तेन सर्वाधिराजेन विवस्वद्भिम्बवर्तिना ।। अविवादस्तु तस्यैव पादयोरात्मनोर्पणम् ।। इत्यादि शास्त्रोक्तरीत्या च फलार्थं गङ्गा समुद्रस्नानादिः परित्याज्यः ।।

ननु पापशमनार्थं वा प्रायश्चित्तार्थं गङ्गास्नानादिकं कर्तव्यमिति चेन्न श्रीविष्णुधर्मे अष्टसप्ततितमे—मेरुमन्दरमात्रोऽपि राशिः पापस्य कर्मणः । केशवं वैद्यमासाद्य दुर्व्याधिरिव नश्यति । अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि । यथेषीकातूलमग्नौ प्रोतं प्रदूयेत । एवं हास्य सर्वे पाप्मानः प्रदूयन्ते । तस्य उदिति नाम उदेति ह वै सर्वेभ्यः पाप्मभ्यः य एवं वेद । तमेवं विदित्वातिमृत्युमेति । इत्याद्युक्तरीत्या प्रपत्तिविद्यावेद्यस्य भगवतः माहात्म्येनैव प्रपन्नानां तेषां अनादिपापसञ्चयस्य अनन्तस्यापि—

दुराचारोऽपि सर्वाशीः कृतघ्नो नास्तिकः पुरा ।
समाश्रयेदादिदेवं श्रद्धया शरणं यदि ।
निर्दोषं विद्धि तं जन्तुं प्रभावात्परमात्मनः ।।

इत्युक्तरीत्या निश्शेषविनाशसंभवात् । प्रपत्त्यनन्तरपापानामपि, प्रायश्चित्तिरियं सात्र यत्पुनः शरणं व्रजेत् । शरणं व्रजेदिति—यत्पुनः यत्तु इत्यर्थः । किञ्चित्पदोत्तरं श्रूयमाणस्य पुनःशब्दस्य आवृत्त्यर्थकत्वाभावात् । अतः प्रथमदशायां संभाविता, या प्रपत्तिः, सैवात्रानन्तरकालप्रसक्तपापविषयेऽपि प्रायश्चित्तिस्स्यादित्यर्थः । प्रायश्चित्तान्यशेषाणि तपः कर्मात्मकानि वै । यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ।। इत्याद्युक्तरीत्या पूर्वकृतप्रपत्तिविद्यावेद्यसनातनधर्मात्मककृष्णानुस्मरणेनैव निवृत्तिसंभवात् । नरस्य बुद्धिदौर्बल्यादुपायान्तरमिष्यते इति उपायान्तरगवेषणस्य बुद्धिदौर्बल्यकार्यत्वेन गर्हि-

त्त्वात् । तृतीयो द्विविधो राशिः उत्पन्नानर्थनाशनः । तमंशं नैव कुर्वीत मनीषी पूर्वराशिवदिति प्रायश्चित्तात्मककर्मणां महापातकतुल्यतया प्रपन्नं प्रति विशेषतः निषिद्धत्वाच्च । तेषां पापप्रसङ्गाभावेन तेषां सर्वपापवत्ताकथनस्य बाधितत्वाच्च । सर्वत्र तत्तदधिकारिभेदेन तत्तत्कर्तव्यव्यवस्था वक्तव्येति सर्वशिष्टसंमतम् । तथोक्तं सच्चरित्रपरित्राणे परमैकान्तिस्वरूपमाह भरद्वाजः—न्यस्ताशेषभरः श्रीशे यस्तु दास्यैकजीवितः । स एष परमैकान्तीति । अन्यत्रापि—देवतान्तरशब्दादिभक्तिकृष्णाख्यहेतुषु । साभ्यकृतपरमैकान्तीत्याचार्यनिष्ठोऽपि परमैकान्तीत्युच्यते । गुरुणा योऽभिमन्येत गुरुं वा योऽभिमन्यते । तावुभौ परमां सिद्धिं नियमादुपगच्छतः ॥ इत्याचार्यनिष्ठौ भरद्वाजेन विभक्तौ । एतेषामभिगमनादिपाञ्चकालिकं यथार्हं भगवत्प्रीत्यर्थमावश्यकं । तदाह शाण्डिल्यः—यथौषधीनाममृतं मणीनां कौस्तुभो यथा । सर्वेषामपि धर्माणां श्रेष्ठो भागवतो विधिः । सर्वधर्मान् समुत्सृज्य पाञ्चकाल्यमनुव्रताः । व्यामिश्रयोगनिर्मुक्ता गच्छन्ति पुरुषोत्तमम् । इति । भरद्वाजश्च—कृत्वाभिगमनं पूर्वमुपादाय च संपदः । इष्ट्वाऽधीत्य च युञ्जानो भागैः कालं नयेदिति । इह श्रुत्यादिनियता वृत्तिरेव स्वयं फलम् । परत्र तु परेशस्य कामात्कामप्रवृत्तयः ॥ इति च । मन्यन्ते च स्वकीयाग्नः स्वप्रीन्त्यै स्त्रोचितां स्वयम् । नाथः स्वकीयसेवां तां वृत्तिं कारयतीति वै ॥ इति च । वासिष्ठसंहितायां—यस्तूपायतया नित्यं नित्यनैमित्तिकादिकम् । सत्कृत्यं कुरुते विष्णोर्वैष्णवस्स उदीरितः ॥ विष्णोराज्ञा तया यस्तु सत्कृत्यं कुरुते बुधः । स एकान्तीति मुनिभिः प्रोच्यते वैष्णवोत्तमः ॥ इति ।

यस्तु भोगतया विष्णोः सत्कृत्यं कुरुते सदा । स एव परमैकान्ती महाभागवतोत्तमः ॥ अत्र सत्कृत्यशब्देन अभिगमनादिपाञ्च-

कालिकमुच्यते । निषिद्धवर्जनविषये तु — वर्जनीयमकृत्यं तु सर्वेषां करणैस्त्रिभिः । अत्र सर्वेषामिति वैष्णवैकान्ति परमैकान्तिनो विवक्षिताः । अत्र मन्दाधिकारिविषये अकामतस्तु यत्प्राप्तं प्रायश्चित्ताद्विनश्यतीति । उत्तमाधिकारिणां तत्र रुच्यभावेन अकृत्यानवकाशः । तदप्युक्तं वासिष्ठसंहितायां — अकृत्यं वैष्णवः पापबुध्या शास्त्रविरोधतः । एकान्ती परमैकान्ती रुच्यभावाच्च सन्त्यजेत् ॥ इति ।

विहितकरणन्तु काम्यगन्धास्पृष्टनित्यनैमित्तिकानुष्ठानरूपमिति नित्यनित्यं प्रपन्नस्येत्यादिषूक्तम् । परमैकान्तिनां नित्यं कर्मभेदन्यायेन अप्रपन्नकर्मणः कर्मान्तरं भगवत्प्रीत्येकप्रयोजनकम् । यद्वा संयोगपृथक्त्वेन भगवत्प्रीतिफलकं प्रयोगान्तरमिति पक्षद्वयम् । कारुणिकानां तु आनृशंस्यमूलकं तदनुष्ठानमित्यपि पक्षोऽस्ति । एतत्पक्षत्रयं विस्तररहस्यादिषु स्थितम् ॥ अभिगमनादिस्वरूपं शाण्डिल्येन विस्तरेणोक्तं तत्रैव द्रष्टव्यम् ॥

अग्नींश्च जुहुयात्प्रातः मेध्यैरेव समिद्गणैः । हुत्वा जप्त्वा तथा स्तुत्वेति सायं प्रातः शाण्डिल्येन होमोभिहितः । भरद्वाजेन तु — यद्वा परमसंस्काराः प्राप्या गुरुसमानतः । सर्वत्र हरिरेवार्च्यो नाग्निकर्मेति केचनेत्युक्तम् । अतोऽग्निकर्म कार्यं न वेति यथोचितं ग्राह्यम् ॥

पाञ्चकालिककर्मविषयेपि अभिगमनादीनां पञ्चानामनुष्ठानमुक्तम् । तदभावे त्विज्यैव पाञ्चकालिकत्वानापन्ना । तदाह भरद्वाजः — प्रातश्चाभिगमनं दृष्टचोपादानं मनसार्चनम् । स्वाध्यायः कीर्तनाद्योगस्त्वार्पणादपि केवलम् । एवं विद्वानेकदापि कुर्वन् स्यात्पाञ्चकालिकः ॥ इति । इदं तु भगवदिज्याप्रधानाधिकारिविषयम् । स्वाध्यायप्रधानस्यापि तेन पाञ्चकालिकत्वं सिध्यति । तदप्युक्तं भरद्वाजेन — कृतं भवति वा सर्वमिज्ययैव हि केवलम् । स्वाध्यायेनापि विदुषः सर्वं

योगेन वा कृतमिति ॥ स्वरूपयाथात्म्यानुसन्धानरूपयोगप्रधानाधिकारिविषये सर्वं योगेन वा कृतमिति । सर्वं अभिगमनादीनि पञ्चेत्यर्थः । आचार्यनिष्ठस्य तु तदाराधनमेव पाञ्चकालिकस्थानाभिषिक्तम् । तदाह—पूजनेन गुरोर्वापीति । तदीयार्चननिष्ठस्य तदेव तत्स्थानापन्नमित्यपि तेनैवोक्तं—सतां वा परिवेषणादिति । तत्तत् प्रधानाधिकारिणामितराणि चत्वारि संग्रहेणानुष्ठेयानीति भावः ॥

स्वाध्यायस्वरूपं च शाण्डिल्येनोक्तं — सच्छास्त्रपाठपठनैः शास्त्रार्थस्यापि शिक्षया । शास्त्रार्थज्ञापनैर्वापि शिक्षयेच्छास्त्रमादरात् । व्याख्यानैर्लेखनैर्वापि ग्रन्थनिर्माणकर्मणा । शिष्याणां शिक्षया वापि स्वाध्यायार्थोयमुच्यते ॥ इत्यादि । भरद्वाजश्च — साङ्गान्वेदानधीयीत न्यायैश्चार्थं विचिन्तयेत् । इत्यारभ्य सद्भिः प्रणिहितांश्चान्यान् प्रबन्धान्परिशीलयेदित्यन्तं विस्तरेणाह । स्वरूपरूपविभव गुणकर्मादि शार्ङ्गिणः । व्याचक्षीत निबध्नीयात् शृणुयाद्विलिखेत्पठेत् ॥ इति । योगस्वरूपं शाण्डिल्येनोक्तम् । ईदृशः परमात्मायं प्रत्यगात्मा तथेदृशः । तत्संबन्धानुसन्धानमिति योगः प्रकीर्तितः । इत्यादिना ।

एवं पाञ्चकालिकानुष्ठानं साक्षात्कैङ्कर्यरूपं यद्वा कारुणिकानामानृशंस्येन प्राप्तं नित्यनैमित्तिकं कैङ्कर्यकोटिघटितमिति पक्षद्वयं पूर्वाचार्यग्रन्थेषु स्थितम् । सर्वाधिकारिणामपि निषिद्धवर्जनमावश्यकं, प्रायश्चित्तन्तु प्रपत्तिरेव । पूर्वेषामुत्तरेषां च न्यासो नाशाय पाप्मनाम् । सर्वेषामपचाराणामयं हि क्षामणं भवेदिति भरद्वाजपरिशिष्टाद्युक्तेः । प्रतिपदोक्तं तु लोकसंग्रहार्थमितीति । तत्रैव—परमैकान्तिनां भगवदाराधनसोभितयैव स्नानमनुष्ठेयं तदाह शाण्डिल्यः—विशुद्धदन्तवसनो निर्मलीकृतविग्रहः । शुद्धो दक्षः प्रसन्नात्मा यथालब्धैः समर्चयेत् । सतीनां योषितां देहो यथोपकरणं भवेत । भर्तृणां

भगवद्भक्तदेहस्तद्वज्जगद्गुरोः ॥ इति । अत्र पूर्वोक्तशौचादिकमपि तदुपयोगितयैव कार्यमिति स्फुटम् ॥

नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम् । क्रियास्नानं तथा षष्ठं षोढा स्नानं प्रकीर्तितमिति । उक्तेषु षट्सु स्नानेषु नित्यं भगवदाराधनार्थं परमैकान्तिभिरनुष्ठेयम् । चण्डालशवधूमादि स्पृष्ट्वा स्नातां रजस्वलाम् । स्नानार्हस्तु यदा स्नाति स्नानं नैमित्तिकं हि तदिति उक्तं नैमित्तिकं स्नानं अपि परमैकान्तिभिरनुष्ठेयम् । अन्यन्नानुष्ठेयं । समुद्रस्नानं काम्यत्वान्न परमैकान्तिभिरनुष्ठेयम् । स्मृतिरत्नाकरे – अथ काम्यमित्युपक्रम्य शातातपः – यो नरः स्नानतीर्थेषु समुद्रे सेतुबन्धने । सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति इति काम्यत्वोक्तेः । माघस्नानस्य काम्यत्वनिर्वलनान्नानुष्ठेयम् । प्रातः स्नानेनैव प्रसंगादनुष्ठितत्वमिति न पृथगनुष्ठानम् । गङ्गादिमहानदीस्नानन्तु न नित्यम् । अकरणे प्रत्यवायाश्रवणात् । किन्तु सति संभवे प्रातःस्नानादिकं तत्र कार्यं परमैकान्तिभिः इतीति ॥

अत्र प्रतिपदोक्तं लोकसंग्रहार्थमित्युक्तत्वेन शक्तौ प्रतिपदोक्तं स्यात् अशक्तौ शरणागतिरित्यत्र शक्तौ उपायान्तरानुष्ठानशक्तौ अशक्तौ स्वरूपविरुद्धत्वप्रयुक्त उपायान्तरानुष्ठानाशक्तौ इत्यर्थस्सूच्यते । अधिकार्यन्तराणां प्रतिपदोक्तं प्रायश्चित्तं । सिद्धोपायनिष्ठानां पूर्वप्रपदनस्मरणं प्रायश्चित्तं, अन्यथा–पूर्वेषामपरेषां च न्यासो नाशाय पाप्मनां सर्वेषामपचाराणामयं हि क्षामणं भवेत् ॥ इति, तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः इति, नरस्य बुद्धिदौर्बल्यादुपायान्तरमिष्यते । इति, नार्हन्ति शरणस्थस्य कलां कोटितमीमपि इति, प्रायश्चित्तिरियं सात्र यत्पुनश्शरणं व्रजेत इति भरद्वाजपरिशिष्टादीनां जडत्वापत्तेः । अतः प्रपन्नैः कैङ्कर्यौपयुक्तत्वेन प्रातःस्नानादिकं करणीयमेवेति सिद्धम् ॥

इति श्रीसदनुष्ठानदर्पणे प्रातःस्नानादिकर्तव्यत्वविषयो नाम पञ्चमं प्रतिफलनम् ॥

सदनुष्ठानदर्पणे षष्ठप्रतिफलने प्रतिपाद्यमान सपाद ऊर्ध्वपुण्ड्र-धारणविषये उदाहृतानां प्रमाणानां आकरः, ग्रन्थनामानि च ॥



1 आथर्वणमहोपनिषत्
2 शतपथब्राह्मणं (वाजसनेयकं)
3 वराहोपनिषत्
4 यज्ञोपवीतोपनिषत्
5 नारदीयोपनिषत्
6 सच्चरित्रपरित्राणं
7 पाद्मसंहिता
8 बृहद्भारद्वाजस्मृतिः
9 वराहपुराणं
10 व्यासस्मृत्युत्तरखण्डः (१४ अध्यायः)
11 मरीचिस्मृतिः
12 बृहद्भारद्वाजधर्मशास्त्रं
13 वैखानस भृगुसंहिता
14 पारमेश्वरसंहिता
15 खगेश्वरसंहिता
16 ब्रह्माण्डपुराणं
17 वैखानसे अत्रिप्रोक्त-
18 बृहन्नारदीये [खिलाधिकारे
19 स्कान्दे
20 अत्रिः काश्यपः
21 नारदीयश्वेतमृत्तिकोपनिषत्
22 श्रीपाद्मपुराणं
23 वासिष्ठसंहिता
24 सच्चरित्ररक्षा
25 श्रीनारदीयपुराणे (७४ अध्याये)
26 पारमेष्ठ्यसंहिता
27 अनन्तसंहिता
28 सद्दर्शन सुदर्शने
29 लक्ष्मीतन्त्रे
30 विष्णुरहस्ये
31 ऊर्ध्वपुण्ड्रविजयः
32 ऊर्ध्वपुण्ड्रनिर्णये
33 ऋग्वेदे
34 बृहत्सेनसंहिता
35 पाद्मोत्तरं
36 भार्गवपुराणं
37 कारणसंहिता
38 पराशरमाधवीये

39 बृहन्नारदीये
40 कालाग्निरुद्रोपनिषत्
41 गारुडे
42 तैत्तिरीयश्रुतिः
43 शौनकः
44 सनत्कुमारसंहिता
45 अत्रिस्मृतिः
46 भगवच्छास्त्रे
47 महारत्नकोशे
48 नारायणसंहिता
49 महोपनिषत्
50 आग्नेयं
51 ब्राह्मे
52 वामनपुराणे
53 श्रीकूर्मे
54 शाण्डिल्यस्मृतिः
55 भविष्यत्पुराणे
56 भागवतं
57 निर्णयसिन्धुः
58 आनन्दसंहिता

---



॥ श्रीः ॥

॥ श्रियै नमः ॥

॥ श्रीमते रामानुजाय नमः ॥

॥ श्रीमद्वरवरमुनये नमः ॥

॥ श्रीशुद्धसत्वमहागुरवे नमः ॥

श्रीशुद्धसत्ववरदाचार्यस्वामिभिः अनुगृहीते, सदनुष्ठानदर्पणे

'सपाद ऊर्ध्वपुण्ड्रधारणविषयो' नाम

# ॥ षष्ठप्रतिफलनम् ॥

---

प्रपन्नैः सश्रीचूर्णं सकिंचित् फुल्लाम्बुजमुकुळाकारपादं हरिपादद्वयाकारपुण्ड्रमेव धार्यम्, वचनात् शिष्टाचाराच्च । तथाहि 'ऊर्ध्वपुण्ड्रविजये' आथर्वणमहोपनिषदि – 'हरेः पादाकृतिमात्मनो हिताय मध्ये छिद्रमूर्ध्वपुण्ड्रं यो धारयति स परस्य प्रियो भवतीत्यादिकम्'। वाजसनेयके शतपथब्राह्मणे 'अथ कात्यायनेति होवाच। आदित्यः पुरुषः स आदित्यः कस्मिन्प्रतिष्ठितम्, चाध्यात्मं च प्रतिष्ठितं वेद प्रतितिष्ठति प्रजया पशुभिः यस्मिन्लोकेऽमृतत्वमेति पापः पापं हरति सुदर्शनं धार्यमित्यूर्ध्वपुण्ड्रं द्विरेखं भवति ब्रह्मणः सायुज्यं सलोकतां जयति य एवं वेदेति'। वराहोपनिषदि 'मत्पादाकृती-ऽथोर्ध्वपुण्ड्रान्नासादथ स्मृता' इति। यज्ञोपवीतोपनिषदि 'नासादिकेशपर्यन्तमूर्ध्वपुण्ड्रं धारये' दिति। नारदीयोपनिषदि च 'अथ प्रणिपत्य, नारदो ब्रह्माणमन्वपृच्छत्। इत्यारभ्य 'देवपितृकर्माणि

आरभमाणः, तया (श्वेतमृदा) नित्यमूर्ध्वपुण्ड्रं बिभृयात् तद्रहितं कर्म विफलं रक्षांसि गृह्णीयुरित्येतदनन्तरम् तदेवमभ्युक्तं भवति-

नासादिकेशान्तमूर्ध्वपुण्ड्रम् विष्णोः स्थितस्य चरणद्वयाकृति एकांगुलपाद तरोस्तु मूले। तदुत्पन्ने च द्वे शाखे, तथैव मध्यावकाशः अंगुलादन्यूनः सश्रीः प्रतिष्ठायै श्रीः हरिद्रेत्यादि। इत्थं श्रुतिः सच्चरित्रपरित्राणे व्याख्याता-एकांगुलपादमिति द्वितीयैकवचनस्य छान्दसो लुक्। इदं च ऊर्ध्वपुण्ड्रविशेषणम्। अत्र बिभृयादित्यनुषज्यते। विष्णोः स्थितस्य, चरणद्वयाकृति च तद्विशेषणम्-इदञ्च आथर्वणे 'हरेः पादाकृतिमिति सामान्येनोक्तस्य स्थित्या द्वित्वेन च विशेषणात् विशेषसमर्पणपरम्, एकांगुलः पादः यस्येति बहुव्रीहिः। अनेन च अथर्वणानुक्तः पादो विधीयते। अत्र एकांगुळशब्दम्-

पाद्मसंहिता क्रियापादे द्वादशाध्याये 'शालिभिर्वा ऋजुन्यस्तैः त्रिभिर्मानान्तरं भवेत्। वातायनपथं प्राप्य ये भान्ति रविरश्मयः। तेषु सूक्ष्मं विस्फुरन्ति रेणवः परमाणवः। तेऽष्टौ केशा ह्यधस्तेऽष्टौ लीक्षायूकस्तदष्टकम्। तदष्टकं यवास्तेऽष्टौ अंगुलिस्समुदाहृता' इति। पाठादिप्रमाणकल्पकतयोक्तस्य ऋजुतया न्यस्तशालित्रयप्रमाणस्य वा, तिर्यक् न्यस्त अष्टयवप्रमाणस्य वा, अंगुलसंज्ञकस्य वाचकम्, नासादौ द्व्यङ्गुलं पादमित्युपबृंहणानुरोधात्। तत्तद्वचनस्थांगुलशब्दस्य यथासंभवं शिल्पशास्त्रोक्तप्रकारेण श्रुत्याद्यनुसारेण, मुष्ट्यङ्गुलपरिमितत्वादिकं कल्पनीयम्। एवं सपादोर्ध्वपुण्ड्रे दृष्टान्तमाह, तरोरित्यादिना, तदिति पृथक्पदं पुण्ड्रपरम्। यथा शब्दोऽध्याहर्तव्यः॥ तथैवेत्युक्तेः। तरोरिति पञ्चमी, अयमर्थः-मूले तरोरुत्पन्ने, मूलावच्छेदेन वृक्षादुत्पन्ने द्वे शाखे यथा तथा तत्पादसहितं मध्ये छिद्रसहितं स्थितस्य विष्णोश्चरणयुगाकार-

मूर्ध्वपुण्ड्रं भवतीति । एवं सपादोर्ध्वपुण्ड्रं श्रुतिविहितमिति सिध्यति । बृहद्भारद्वाजस्मृतौ पञ्चमेऽध्याये 'ललाटे धारयेत्पुण्ड्रं हरिपादद्वयाकृति' मिति । वराहपुराणे 'एकान्तिनो महाभागा मत्स्वरूपविदोऽमलाः । सान्तरालान्प्रकुर्वीरन् पुण्ड्रान्यमम पदाकृ ती'निति । ललाटे पद्माकार-पादसहितोर्ध्वपुण्ड्रधारणे प्रमाणम्-पाद्मसंहितायां क्रियापादे दशमाध्याये 'मध्ये कर्णिकया युक्तं किञ्चित्फुल्लाम्बुजाकृती'ति । व्यासस्मृत्युत्तर-खण्डे चतुर्थाध्याये 'अम्भोजमुकुळाकारं पादं द्व्यङ्गुलसम्मितम् । नासिकादिभ्रुवोर्मध्यपर्यन्तं परिकल्पयेत् ।। भ्रूमध्यात्केशपर्यन्तमन्तराळं प्रकल्पयेत् । पार्श्वौ अंगुळिमात्रौ तु अवक्रौ सुमनोहरौ ।। हरिपाद-द्वयाकारं पुण्ड्रमेवं तु धारयेत्'। इति । मरीचिस्मृतौ 'चतुरंगुल-मूर्ध्वाग्रं द्व्यङ्गुलं विस्तृतं मृदा । द्विजः पुण्ड्रं सपादं च सान्तरालं च धारयेत्' ।। इति । कुक्ष्यादि त्रिकान्ताङ्गेषु चतुरश्रपीठमध्यस्थ-पद्माकारपादसहितऊर्ध्वपुण्ड्रधारणे प्रमाणम् । व्यासस्मृत्युत्तरखण्डे चतुर्थाध्याये—'तथा कुक्ष्यादिकाङ्गेषु पादन्तु चतुरश्रकम्'। इति । अस्यार्थः – तथा अम्भोजमुकुळाकारं, चतुरश्रकं, चतुरश्रपीठयुक्तम् । चतुरश्रपीठमध्यस्थमिति भावः ।।

ननु कुण्डलीकृतसर्पस्थ हरिपादाकृतिं न्यसेदित्युक्तत्वेन पाद-विहीनपुण्ड्रमेव धार्यमिति चेन्न, श्रूयतामवधानेन । कुण्डलीकृतसर्पस्थ-हरिपादाकृतिमित्यत्र कुण्डलीकृतसर्पस्थेति हरिपादविशेषणम् । श्रुत्या-दिविहितपाददृष्टान्तार्थतया स्वरसम् । कुण्डलीकृतसर्पो हि, सर्प-शिरसि स्थितभगवत्पादस्य आसनस्थानीयः तेन हरिपाददृष्टान्तितस्य पुण्ड्रस्य पादे दृष्टान्तो भवति । अतः तत्रापि निष्पादपुण्ड्रानवकाशः ।।

तथा प्रमाणानि, बृहद्भरद्वाजधर्मशास्त्रे पञ्चमाध्याये—'भ्रू-मध्यादन्तराळं स्यात् द्व्यंगुळं, त्र्यङ्गुलं तु वा । नासिकादिभ्रुवो-र्मध्यपर्यन्तं द्व्यंगुळं पदम्' ।।

श्रीवैखानसे भृगुप्रोक्तायां संहितायां पञ्चविंशेऽध्याये—नासिकामूलमारभ्य कूर्चान्तं पादमालिखेत । तदस्य प्रियमित्युक्त्वा पादस्योर्ध्वं सभालिखेत्' इति । कूर्चमस्त्री भ्रुवोर्मध्यमित्यमरः ॥

पारमेश्वरसंहितायां—'नासादौ द्व्यङ्गुळं पादं मध्ये तु द्व्यंगुळं भवेत् । पार्श्वमङ्गुलिमात्रन्तु सुस्फुट धारयेद् द्विजः' ॥ इति ॥

खगेश्वरसंहितायां—'के मुक्तियोग्यास्तद्भक्तपर्याये पङ्क्तिपावनाः । ब्रूहि मे भगवन् येन कुलोद्धारो भविष्यति ॥

नारदः—'शृणुष्व नृपतिश्रेष्ठ त्वमेव सुकृती भुवि । वक्ष्यामि सरहस्यन्तु श्रवणात्कुलपावनम् ॥ ये तप्तशङ्खचक्राङ्का विष्णुपादैकसंश्रयाः । सदा विष्णुकथोत्साहाः विष्णुधर्मपरायणाः ॥ सपीठपुण्ड्रसहिता लक्ष्मीचिह्नसमन्विताः । द्वादशाक्षरतत्त्वज्ञाः सदाष्टाक्षरसेवकाः ॥ प्रपत्तिद्वयसंयुक्तास्तदर्थे त्यक्तजीविताः । द्वादशोर्ध्वस्थले पादपुण्ड्राङ्कास्सर्वदैव हि ॥ ते मुक्तियोग्यास्तुलसीमणिमालाक्षधारिणः । तद्गोष्ठीनिरता ये तु तद्भक्ताः पङ्क्तिपावनाः ॥ गृहभाण्डपदार्थांश्च शङ्खचक्रादिचिह्नितान् । सपादपुण्ड्रसहितान् ये कुर्वन्ति विचक्षणाः । परमैकान्तिनस्ते हि नारायणसमा मताः' ॥ इति ।

ब्रह्माण्डे सनत्कुमारः—'समूलपुण्ड्रसहितास्तप्तचक्रादिचिह्निताः । सदा पावनदेहास्ते तेषां दत्तमनन्तकम्' । इति ॥

पाद्मसंहितायाम्—'नासिकायास्त्वधो भागो नासामूलं प्रचक्षते । नासिकामूलमारभ्य ललाटान्तं प्रकल्पयेत्' । इति अत्र शब्दवैरूप्यं आर्षत्वच्छान्दसाभ्यामिति मन्तव्यम् ॥

वैखानसभृगुप्रोक्तसंहितायां क्रियाधिकारे ऊर्ध्वपुण्ड्रविधायके पञ्चविंशेऽध्याये—नासिकामूलमारभ्य कूर्चान्तं पादमालिखेत् । तदस्य

प्रियमित्युक्त्वा पादस्योर्ध्वं समालिखेत् ॥ विष्णोर्नुकमिति स्मृत्वा धारयेत् श्वेतमृत्तिकाम् । रेखामङ्गुलिविस्तीर्णां चतुरंगुलमायताम् ॥ प्रतद्विष्णुस्तवेत्युक्त्वा ललाटे दक्षिणे लिखेत् । परोमात्रेति मन्त्रेण ललाटे वामके लिखेत् ॥ नासिकामूलमारभ्य केशान्तं धर्षयेद्बुधः । विग्रहे गोपुरे चापि मण्टपे मङ्गले तथा ॥ मठे गृहे तथा वाजे रथे याने तथैव च । एवमेव प्रकारेण चिह्नं कृत्वा सलक्षणम् ॥ पादुके मे तथा चैव चिह्नमेवं समालिखेत् । स्त्रीणां चापि तथा चैव श्रीचूर्णं श्वेतमृत्तिकाम् ॥ कूर्चमध्ये तथालिख्य चन्द्रमोर्ध्ववदालिखेत्' । इति । वाजः अन्नं वाजो निस्वनपक्षयोः' ॥ वेगे पुमानथ क्लीबे घृतयज्ञान्न वारिषु' । इति मेदिनीनिघण्टुः । 'अन्नं वै वाजः' इति श्रुतिः ॥

वैखानसे अत्रिप्रोक्ते खिलाधिकारे चतुश्शताधिकद्वादशाध्याये 'विष्णोर्नुकमिति नासिकामूलमारभ्य कूर्चान्तं पादं कृत्वा 'तदस्य प्रियमिति' तिर्यग्रेखास्त्रिरंगुळम् । प्रतद्विष्णुरिति दक्षिणभागे ललाटे, परोमात्रेति मन्त्रेण ललाटे वामके लिखेत् ॥ केशान्तमनामिकया मृत्तिकां धारयेत् । इति । मध्ये, अन्ते इत्याह भगवान् वैखानसोऽत्रिरिति ॥

अत्र तु पृथक् पृथक् मन्त्रविनियोगपूर्वकम् उभयोः पार्श्वयोः पुण्ड्रावयवविन्यासविधानस्वारस्येन तस्य पदद्वयसमाकारत्वमेव सूचितम् । न चैवं पादद्वयसमानाकारत्वलाभेऽपि सपीठपादद्वयसमानाकारत्वालाभ इति वाच्यं, उक्तरीत्या स्थितस्य विष्णोरित्यत्र स्थितशब्दस्य पद्मपीठस्थितिविशिष्टार्थकत्वस्य पाद्मसंहितावचनविशेषप्रत्यभिज्ञापनमुखेन लाभसंभवेन, 'कुण्डलीकृतसर्पस्थहरिपादद्वयाकृतिम् । ऊर्ध्वपुण्ड्रं लिखेत्प्राज्ञस्सपीठं सान्तराळकम् ॥ इत्युपबृंहणसहकारेण, शेषात्मकपादपीठास्थितिविशिष्टार्थकत्वस्य लाभसंभवेन वा तल्लाभ-

संभवात् । 'संभवति विशेषणतया निवेशे उपलक्षणतया निवेशस्य अन्याय्यत्वात्, उपलक्षणतया निवेशे कुण्डलीभूतेत्यादि विशेषणस्य वैयर्थ्यापाताच्च । तस्मात् पाद, पीठ, मूलादिशब्दैः सपीठत्वविधायक-बहुप्रमाणानुसारेण तस्य विशेषणत्वमेव अङ्गीकरणीयम् ॥

बृहन्नारदीये–'यो गर्भवैष्णवो नित्यं चरेत्पुण्ड्रं सपीठकम् । कुलकोटिं समुत्तीर्य सुरेशो भवति ध्रुवम्' ॥ इति ॥

स्कान्दे कुमारं प्रति शिववचनम्–ऊर्ध्वपुण्ड्रं सदा धार्य-मूर्ध्वलोकं गमिष्यता । मध्ये छिद्रसमायुक्तं सपीठं च श्रिया युतम् ॥ वैष्णवस्तु विशेषेण नमोन्तैः केशवादिभिः' । इति ॥

अत्रिः–'सपादमूर्ध्वपुण्ड्रं तु द्विषट्स्थानेषु विन्यसेत् । पद्माक्षतुलसीदाम धारयित्वा गले सदा ॥ स एव वल्लभो विष्णो-स्तस्य लक्ष्मीः प्रसीदति' । इति ॥

काश्यपः–'योर्चको मे सपीठन्तु द्विषट्पुण्ड्रं सदा शुभम् । धृत्वा च तुलसी दाम सदा मत्प्राणवल्लभः' ॥ इति ।

वराहोपनिषदि–'केशवादि द्वादशैर्नामभिरूर्ध्वपुण्ड्राणि धार-येत्' इति ।

नारदीयश्वेतमृत्तिकोपनिषदि–'तया नित्यं ऊर्ध्वपुण्ड्राणि बिभृयात् मन्त्रैः केशवादीनाम्' । इति ॥

अत्रिः–'कालोऽपि बिभ्यति परं दृष्ट्वा वै गर्भवैष्णवम् । सपीठ-पुण्ड्रिणं श्रेष्ठं तुलसीमणिभूषणम्' । इति । तथा च सपादोर्ध्वपुण्ड्र-मेव श्रुतिस्मृतीतिहासपुराणपाञ्चरात्रवैखानसवचनसदाचारसिद्धम् ॥

ननु ईदृशपुण्ड्रं शूलसमाकारत्वेन निषिद्धम् पराशरे–'ऊर्ध्व-पुण्ड्रं त्रिशूलं च वर्तुलं चतुरश्रकम् । अर्धचन्द्राकृति लिङ्गं वेदनिष्ठो

न धारयेत्'॥ इति। स्कान्दे–'शूलपुण्ड्रं द्विजः कुर्याल्लीलयापि कदाचन। तदाकारेण शस्त्रेण पीड्यते यमकिङ्करैः'॥ इत्युक्तत्वादिति चेन्न॥

शूलस्य त्रिशिखत्वेन तत्समानाकारतया प्रान्तनिशितत्रिरेखक-पुण्ड्रकल्पनस्यैव निषिद्धत्वेन द्विरेखस्य मूलाग्रसमपरिमाणस्य अस्य पुण्ड्रस्य त्रिशूलसमाकारत्वगन्धाप्रसङ्गात्। न च शास्त्रैः त्रिशूलाकारोर्ध्वपुण्ड्रमात्रं निषिध्यते–अपि तु पादरहितपुण्ड्रस्यापि निषिद्धत्वमुच्यते। तथाहि–

भरद्वाजसंहितायाम्–'वक्रं विरूपं बद्धाग्रं छिन्नमूलं पदच्युतम्। अशुद्धं रूक्षमासक्तं तथानङ्गुलिकल्पितम्॥ विगन्धमपसंख्यं च पुण्ड्रमाहुरनर्थकम्'। इति। अत्र पदच्युतमिति निष्पादोर्ध्वपुण्ड्रस्य आनर्थक्यमुच्यते॥ 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु'। इत्यभिधानात्। पदशब्दः पादपरः। च्युतशब्दस्त्यक्तार्थकः–च्युतं त्यक्तं पदं यस्य इति विग्रहे बहुव्रीहौ वाहिताग्न्यादिष्विति सूत्रेण च्युतशब्दस्य परप्रयोगः। तथा च अक्षरच्युतक, मात्राच्युतक, बिन्दुच्युतकवत् पदशब्दो व्युत्पाद्यः। त्यक्तपाद पुण्ड्रमनर्थकं आहुरित्यर्थः। अयं च एकाङ्गुलपादतरोस्तु मूल' इति श्वेतमृत्तिकोपनिषदादिसिद्धस्य त्यागे पुण्ड्रानर्थक्यविधिः पादस्यावश्यकत्वबोधनार्थः। न च पदात् स्थानात् च्युतं इत्यर्थान्तरं शङ्क्यम्। च्युतशब्देन पञ्चमीसमासविधानाभावात् पदच्युतमित्यनेन अस्थानकृतत्वरूपार्थालाभात्। गलितार्थकत्वे कृष्णस्य पुण्ड्रस्य गलितत्वासंभवेन स्रुतद्रव्यके लक्षणाप्रसक्तेः। अतः पदशब्दस्य पादे प्रसिद्ध्यनुरोधात् प्रत्यक्षसूत्रविहितबहुव्रीह्यनुरोधात्। अक्षरच्युतकादि शब्दसारूप्यानुरोधात् लक्षणाविरहानुरोधात् श्रुत्यादौ पादविधानानुरोधाच्च पदच्युत-

मिति पादरहितं पुण्ड्रमनूद्य अनर्थकमिति, तस्य अनर्थकत्वं विधीयत इति युक्तम् ।

तथैव श्रीपाद्मे पुराणे उत्तरखण्डे उमामहेश्वरसंवादे ऊर्ध्व-पुड्रविधिकथननामके एकत्रिंशेऽध्याये 'वर्तुलं तिर्यगच्छिद्रं ह्रस्वं दीर्घतरं तनु । वक्रं विरूपं बद्धाग्रं छिन्नमूलं पदच्युतम् । अशुभ्रं रूक्षमासक्तं तथानङ्गुलिकल्पितम् ॥ विगन्धमपसंख्यानं पुण्ड्रमाहु-रनर्थकम्' । इति ॥

स्मृत्यन्तरे–'सङ्कीर्णं पादरहितं श्रियाश्लिष्टं निराकृति । ये कुर्वन्ति दुरात्मानः ते यान्ति नरकार्णवम्' ॥ इति ।

संहितायाम्–अष्टाक्षरजपी चैव ह्यपवित्रो मदर्चकः । पाद-हीनोर्ध्वपुण्ड्रश्च रौरवं नरकं व्रजेत्' ॥ इति ।

काश्यपः –'पादहीनोर्ध्वपुण्ड्राणां धारणाच्च विशेषतः । पुण्ड्रान्त-राळे भस्मादिधारणात्पतितो भवेत्' ॥ इति ।

'वैखानसे–'मत्पादाकृतिपुण्ड्राणि विना पीठाकृतानि चेत् । नाहं तस्य प्रसन्नः स्यां ध्रुवं ज्येष्ठा प्रसीदति' ॥ इत्यादि ।

किंच प्रपन्नैः दीपशिखाकारसूक्ष्माग्र ऊर्ध्वपुण्ड्रमपि न धार्य-मेव । श्रीमन्निगमान्तगुरुभिः सच्चरित्ररक्षायां ऊर्ध्वपुण्ड्रधारणविधौ 'ननु भगवदर्चावतारेषु दीपशिखाकारोर्ध्वपुण्ड्रस्य दर्शनात् 'यच्छील-स्वामी'ति न्यायेन भागवतैरपि तथैवानुष्ठानमिति चेन्न । वचन-विरोधे न्यायस्यानवतारात् । अन्यथा भगवदनुष्ठितगोपकन्योन्मादन, स्वकुलविनाशन, बुद्धसमयप्रवर्तनादेरपि प्रसङ्गात् । अतो न स्वामि-कृतं सर्वं भृत्येनाप्याचरणीयम् । लोके चैतदेव द्रष्टव्यम् । न च दीपशिखाकारमेव अर्चावतारेषु ऊर्ध्वपुण्ड्रं कुर्वीत इति विधिः अस्ति ।

पृष्ठ एव च । बाह्वोर्मध्ये च सप्त स्युः पुण्ड्राण्यष्टांगुलानि वै ॥ व्यूहं तु विद्यात्प्रथमं चतुरंगुलसंमितम् । अष्टांगुलं द्वितीयं तु द्विविधं व्यूहसंज्ञितम् ॥ एवं यः कुरुते नित्यं मत्सायुज्यमवाप्नुयात्' इति । तस्मिन्नेवाध्याये—'द्व्यंगुलं विस्तृतं रम्यं चतुरंगुलमायतम् । प्रथमं व्यूहमेव स्यात्पश्च पुण्ड्रस्य लक्षणम् ॥ इत्यूर्ध्वपुण्ड्रं यः कुर्यान्न मृत्योर्वशमाप्नुयात् । केशवादिनमोऽन्तं वै जप्त्वा द्वादशनामभिः । ताः स्मृत्वा देवदेवेशमूर्ध्वपुण्ड्रं समाचरेत्' ॥ इत्यादिवचनैरूर्ध्वपुण्ड्राणां स्थानमध्यान्तरालोच्छायसंख्यादेवताध्यानानां प्रदर्शितत्वेन श्रीमन्निगमान्तगुरूणामपि द्वादशोर्ध्वपुण्ड्रधारण एव मुख्यतात्पर्यात् । तैः त्याज्यं विप्रैः त्रिपुण्ड्रादिकमिति कथितमितिवत् विशिष्य द्वादशोर्ध्वपुण्ड्रधारणनिषेधानुक्तेः ॥

ननु वराहोपनिषदि—'मोक्षं देहि शिरसि' इत्युक्तत्वेन त्रयोदशोर्ध्वपुण्ड्राण्येव धार्याणि' इति चेन्न । तस्यां उपनिषदि किं स्थानं इति प्रश्नः । रेखाद्वादशके स्थानमित्युत्तरं—केशवादिद्वादश नामभिः ऊर्ध्वपुण्ड्राणि धारयेदिति द्वादशोर्ध्वपुण्ड्रधारणं चोक्तम् । 'तया नित्यमूर्ध्वपुण्ड्रं बिभृयान्मन्त्रैः केशवादीनाम्' इति नारदीयश्वेतमृत्तिकोपनिषदेकार्थ्यं च, किन्तु 'मोक्षं देहि शिरसि' इति शिरसि करस्थितश्वेतमृत्तिकाप्रक्षालनतोयप्रोक्षणमुक्तम् ॥

ब्रह्मरात्रे अनन्तसंहितायां—श्रीश्वेतमृन्निशाचूर्णधारणानन्तरं तथा । मत्तीर्थभक्ताङ्घ्रितीर्थस्वीकारानन्तरं तथा ॥ मम प्रसादस्वीकारानन्तरं वैष्णवैर्द्विजैः । न हस्तक्षालनं कार्यं तत्र नाचमनक्रिया' इति, भूमौ श्वेतमृत्तिकाजलबिन्दुपतनस्य दोषकरत्वोक्तेः ॥

तथैव श्रीमन्निगमान्तगुरुभिः सच्चरित्ररक्षायां ऊर्ध्वपुण्ड्रधारणविधौ ब्रह्माण्डे—'ललाटे केशवं ध्यायेन्नारायणमथोदरे । माधवं

हृदये चैव गोविन्दं कण्ठकूबरे। उदरे दक्षिणे पार्श्वे विष्णुं ध्यात्वा विचिन्तयेत्। तत्पार्श्वे बाहुमध्ये तु चिन्तयेन्मधुसूदनम् ॥ त्रिविक्रमं च तत्स्कन्धे वामपार्श्वे तु वामनम्। श्रीधरं बाहुके वामे हृषीकेशन्तु स्कन्धके ॥ अपरे पद्मनाभः स्यात्त्रिके दामोदरं स्मरन्। तत्प्रक्षाळनतोयेन वासुदेवेति मूर्धनि ॥ एवं हि धारयेन्नित्यं मद्भक्तस्तूर्ध्वपुण्ड्रकम्। धारयित्वा ततो मन्त्रैः केशवाद्यैश्च नामभिः ॥ अंगुलीभिः स्पृशेत्पुण्यमूर्ध्वपुण्ड्रं मनोहरम्' इति श्रुत्युपबृंहणस्य प्रदर्शितत्वात् त्रयोदशपुण्ड्रादि विधायकवचनं एकान्तित्वरहितवैष्णवमात्रविषयम्। मोक्षार्थी च विशेषेण द्वादशाक्षरविद्यया ॥ द्वादशैतानि पुण्ड्राणि कुर्यात् द्वादशनामभिः'। इति ब्रह्मरात्रादिवचनैः प्रपन्नानां द्वादशोर्ध्वपुण्ड्रस्यैव मुख्यत्वप्रतिपादनात् एकपादसमानाकारोर्ध्वपुण्ड्रमेव धार्यमिति चेत्तन्न संभवति, द्वित्वसंख्याविशिष्टपादशब्दघटितोर्ध्वपुण्ड्रवचनानां दर्शनेऽपि 'एकपादाकृतिं न्यसेत्' इति वचनस्य कुत्राप्यश्रुतदृष्टपूर्वत्वात् ॥

'चतुरंगुलमूर्ध्वाग्रं द्व्यंगुळं विस्तृतं मृदा। द्विजः पुण्ड्रमृजुं सौम्यं सान्तराळं तु कारयेत् ॥ अच्छिद्रमूर्ध्वपुण्ड्रं तु यः करोति विमूढधीः। स पर्यायेण तान्याति नरकानेकविंशतिम् ॥ विमलान्यूर्ध्वपुण्ड्राणि सान्तराळानि यो नरः। करोति विमलं तत्र मन्दिरं मे करोति सः' इति सच्चरित्ररक्षोक्तमरीचिवचनप्राप्तपुण्ड्रमध्यछिद्रस्य एकपादाकारोर्ध्वपुण्ड्रेऽपि कार्यत्वेन स्मार्तैकदेशिधृतैकपादाकारचन्दनोर्ध्वपुण्ड्रवत् कल्पितोर्ध्वपुण्ड्रमध्ये श्रीचूर्णधारणार्थं भेदकरणरूपदोषप्रसक्तेः ॥

प्रथमं सान्तराळं कल्प्यत इति चेन्मैवं सद्दर्शनसुदर्शने— 'औचित्यलिङ्गात्तु हरिं श्रितानां पादाकृतेर्यन्नियमं वदन्ति। द्वयेन

विष्णुं शरणं गतानामौचित्यभूमाङ्घ्रियुगाकृतौ स्यात् ॥ अर्थस्वभावा-न्छुरणादिकानां द्वित्वं हि पूर्वं समुपस्थितं स्यात्। त्वत्पादमूलं शरणं प्रपद्ये इत्यत्र न ह्येकपदप्रतीतिः ॥ उद्धृत्य सच्छिद्रपदं वराहो यत्सान्तराळेति पदं प्रयुङ्क्ते। एकान्तिनां पुण्ड्रमतोऽपि हेतोः पाद-द्वयाकारमिति प्रतीतम्'॥ इत्युक्तरीत्या उपपत्त्यभावात्। श्रुत्या-द्युक्तहरिपादद्वयाकारोर्ध्वपुण्ड्रस्यैव मध्येऽन्तराळविधानाच्च ॥

ननु ललाटे सपद्माकारोर्ध्वपुण्ड्रविन्यासवत् कुक्ष्याद्येकादश-स्थानेष्वपि सपद्माकारोर्ध्वपुण्ड्रविन्यासः क्रियतामिति चेत् इष्टापत्तिः। तथैव सर्वत्र शिष्टैः कुक्ष्यादिषु पद्माकारपादसहितोर्ध्वपुण्ड्राण्येव धार्यन्ते। कुक्ष्यादिषु ऊर्ध्वपुण्ड्राधोभागे चतुरश्रमेव परिदृश्यत इति चेत्, श्रूयतामवधानेन, कुक्ष्यादिषु श्वेतमृत्स्नया करतलामलकीकृत-सर्ववेदशास्त्रार्थयाथात्म्यवन्तः महान्तः प्रपन्नाः प्रथमं चतुरश्रस्थूलपीठं विलिख्य तन्मध्ये किञ्चित्फुल्लपद्ममुकुळाकारपादं विलिख्य तदुपरि पार्श्वयोः हरिपादद्वयाकारशाखाद्वयं विलिख्य तदन्तराळे 'ऊर्ध्वपुण्ड्रस्य मध्ये तु दीपाकारं सुशोभनम्। श्रीचूर्णं धारयेन्नित्यं तस्य विष्णुः प्रसीदति'॥ इति श्रीधर्मोक्तरीत्या दीपाकार श्रीचूर्णरेखां धारयन्ति ॥

तथा च कुक्ष्याद्यङ्गोर्ध्वपुण्ड्रेषु पद्माकारपादसाहित्यस्य तुल्यत्वेऽपि तथा कुक्ष्यादिकाङ्गेषु 'पादं तु चतुरश्रकम्'। इति व्यासस्मृत्यु-त्तरखण्डचतुर्थाध्यायवचनबलात् चतुरश्रस्थूलपीठमात्रं विशेष इति निर्धार्यते। तथा 'अम्भोजमुकुळाकारं पादं तु चतुरश्रकम्, चतुरश्र-पीठयुक्तं चतुरश्रपीठमध्यस्थम्' इति यावत्। चतस्रः अश्रयः यस्येति चतुरश्रमिति बहुव्रीहौ सुप्रातसुश्वेत्यादिना समासान्तो निपातः। चतुरश्रकमिति स्वार्थे कप्रत्ययः। प्रकरणबलात् स्थूलपीठमित्यर्थः। चतुरश्रकं अस्य अस्तीति चतुरश्रकं मत्वर्थीयः अच् प्रत्ययः। अर्श

आदिभ्योजिति सूत्रे अर्श आदेः आकृतिगणत्वात् । सचतुरश्रकमिति पाठश्चेत् अर्थः स्वरसः नात्र चोद्यावकाशः । सर्वत्र चोद्यप्रसक्तेः सर्वस्याप्युच्छेदप्रसङ्गात् ॥

काश्यपस्मृतौ—'योऽर्चको मे सपीठं तु द्विषट्पुण्ड्रं सदा शुभम् । धृत्वा च तुलसीदाम सदा मत्प्राणवल्लभः ॥ सौवर्णं दर्भजन्यं च पवित्रमुभय वरम् । धृत्वा चाष्टाक्षरं जप्त्वा कुलकोटिं समुद्धरेत्' इति सपादोर्ध्वपुण्ड्रधारणपूर्वकं सौवर्णपवित्रदर्भपवित्रधारणपूर्वकं अष्टाक्षरजपकरणविधानेन सौवर्णपवित्रस्यापि दर्भपवित्राकाररीत्या ऊर्ध्वाग्रत्वादिकरणस्य संभवेऽपि 'यथा ते तत्र वर्तेरन् । तथा तत्र वर्तेथाः' इति 'येनास्य पितरो याताः येन याताः पितामहाः' इति श्रुतिमनुस्मृत्यादिभिः प्रामाण्यांशे शिष्टाचारस्यैव मुख्यत्वप्रतिपादनेन शिष्टाचारानुगुण्यात् सौवर्णपवित्रकरणवत् कुक्ष्यादिकाङ्गेषु चतुरश्रस्थूलपीठमध्यपद्माकारसहितोर्ध्वपुण्ड्रधारणविषयेऽप्युपपत्तेः ॥

ननु सच्चरित्ररक्षायां हरिपादसमानाकारत्वस्यैव परमैकान्तिभिरूर्ध्वपुण्ड्राणां विशेषाकारतयोपादेयत्वस्य समर्थितत्वेन पादप्रसङ्गस्यापि अकृतत्वेन केवलयुक्तिमात्रेण नास्मिन्नर्थे प्रामाणिकत्वप्रत्ययो भवेदिति चेन्न । श्रुतिस्मृतिपुराणपाञ्चरात्रवैखानसवचनतात्पर्यपर्यालोचनया ऊर्ध्वपुण्ड्राणां पारमैकान्त्यचिह्नत्वपौष्कल्योपपत्तेः । तदेवं हरिपादसंस्थानत्वं सान्तराळत्वं च सोपबृंहणश्रुतिसिद्धम् भगवदसाधारण्यातिशयलिङ्गं चेति तदेव भागवतैरङ्गीकार्यम् । निरन्तराळं तु निषिद्धमेवेत्यनादरणीयम् । संस्थानान्तराणि तु अमुख्यानीति विभाग इति तत्रत्य श्रीसूक्तिपर्यालोचनया तैः तत्र पादविहीनपुण्ड्रं धार्यमिति अनुक्त्या च निगमान्तगुरूणामपि किञ्चित्फुल्लपद्ममुकुलाकारपादसहितोर्ध्वपुण्ड्रधारण एव तात्पर्यसिद्धेः ॥

यदि च तात्पर्यपर्यालोचनां विना केवलवाक्यमात्रेण यो निर्णयोऽभीप्स्यते तर्हि श्रीचूर्णधारणप्रसङ्गस्यापि तैस्तत्राकृतत्वेन तस्यापि त्याज्यतापत्तेः। तेषां पूर्वोक्तश्रुतिस्मृत्यादिवचनसहस्रशिष्टाचाराप्रदर्शनरूपदोषापादनप्रसङ्गाच्च। ननु कुड्याद्यङ्गेषु स्थूलपीठमध्ये पद्माकारपादं लिखित्वा तदुपरि पार्श्वयोः हरिपादद्वयाकाररेखे तन्मध्ये श्रीचूर्णरेखां च लिखित्वा ऊर्ध्वपुण्ड्राणि, धारयन्ति ॥

श्रीरङ्गादि दिव्यदेशेषु सर्वत्र परकालयतीन्द्रादिकारितप्राकार गोपुरादिषु स्थूलपीठोपरि सपादोर्ध्वपुण्ड्रं प्रकाशते कथमुपपत्तिरिति चेदुच्यते पाद्मपुराणे–पद्मासने च विन्यस्ता हरेः पादाकृतिर्यथा। तथैव क्रियतां सर्वैः ललाटेऽतिमनोहरं इति। पाद्मसंहितायां क्रियापादे, दशमाध्याये–मध्ये कर्णिकया युक्तं किंचित्फुल्लाम्बुजाकृति। इति व्यासस्मृत्युत्तरखण्डे अम्भोजमुकुळाकारं पादं द्व्यंगुलसंमितम्। नासिकादिभ्रुवोर्मध्यपर्यन्त परिकल्पयेत् इति ललाटोर्ध्वपुण्ड्रस्य द्व्यंगुळपरिमितपादवैशिष्ट्यप्रतिपादनेन भगवच्छास्त्रे– नासादौ द्व्यंगुळं पादं मध्ये तु त्र्यंगुलं भवेत्। पार्श्वमङ्गुलिमात्रं तु सुस्पष्टं धारयेत् द्विजः ॥ इति शाखाद्वयमध्यान्तराळस्य त्र्यंगुलपरिमितत्वस्य पार्श्वस्थशाखयोः एकांगुलपरिमितत्वस्य च उक्तत्वेन, वासिष्ठसंहितायाम् ललाटे केशवायेति धारयेच्चतुरंगुलमिति चतुरंगुळपरिमितत्वप्रतिपादनेन च पद्माकारपादाधःप्रदेशमारभ्य सश्रीचूर्णशाखाद्वयाग्रभागान्तं परिमाणगणनावश्यकत्वेन सच्चरित्ररक्षायां श्रीमन्निगमान्तगुरुभिः सतां नासिकामूलमारभ्य केशान्तं हरिपादाकृतिपुण्ड्रधारणस्य स्थापितत्वेन योगयाज्ञवल्क्यस्मृतौ पाद्मसंहितायां च भ्रूमध्यादधस्ताच्चक्षुर्मध्यं तस्मादधस्तान्नासिकामूलमिति, नासिकामूलस्थानस्य विशिष्य प्रतिपादितत्वेन तत्रैव नासिकामूलस्थानस्य पादमूलाद्ब्रह्मरन्ध्राच्चांगुलसंख्याया अपि प्रदर्शितत्वेन, समदृष्टेः पुरुषस्य

कृष्णतारकाद्वयमध्यव्यापि तिर्यक् सूत्रं नासानाळे यत्र पतति तदेव स्थानं चक्षुर्मध्यन्नाम तस्मादधस्तान्नासिकामूलन्नोपरिष्टादिति शिल्पिभि-रुच्यमानत्वेन ललाटे शिष्टाः प्रपन्नाः नासामूलाद्व्यंगुलपरिमितं ईषद्विकसितपद्माकारपादं विलिख्य नासानाळस्य तनुत्वेन मध्ये द्व्यङ्गुलपरिमितान्तराळं विहाय पद्माकारपादोर्ध्वप्रान्तोभयपार्श्वयोः एकांगुलपरिमितोर्ध्वाग्रहरिपादसमानाकारशाखाद्वयं परिकल्प्य तन्मध्ये श्रीचूर्णरेखां परिकल्प्य ऊर्ध्वपुण्ड्रं धारयन्ति। सपादमूर्ध्वपुण्ड्रं तु द्विषट्स्थानेषु विन्यसेत् इति बृहन्नारदीयादिवचनैः कुक्ष्यादित्रिकान्तेषु एकादशस्थानेषु द्व्यंगुलपरिमितपद्माकारपादसहित सश्रीचूर्णहरिपाद-समानाकारशाखाद्वययुतोर्ध्वपुण्ड्रधारणं प्राप्तम्। तथा कुक्ष्यादिकाङ्गेषु पादन्तु चतुरश्रकमिति व्यासोत्तरस्मृत्यादिवचनैः कुक्ष्यादि त्रिकान्तेषु एकादशस्थानेषु चतुरश्रपीठपरिकल्पनमपि प्राप्तम्। तत्र रामानुजार्य-दिव्यचरितायाम् हरेः पादाकृति रम्यमूर्ध्वपुण्ड्रं प्रकल्पयेत्। ललाटे केशवायेति चतुरंगुलमायतम्। द्व्यंगुलं त्र्यंगुलं वापि सान्तराळं प्रकल्पयेत्। कुक्षौ नारायणायेति धारयेत्तु दशांगुलम्। वक्षःस्थले माधवाय न्यसेदष्टांगुलं तथा। गोविन्दायेति मन्त्रेण कण्ठे च चतुरंगुलम्। विष्णुं च दक्षिणे कुक्षौ धारयेत्तु दशांगुलम्। न्यसे-दष्टांगुलं बाहौ दक्षिणे मधुसूदनम्। श्रीधरं वामबाहौ तु न्यसे-दष्टांगुलं तथा। हृषीकेशं वामगळे धारयेच्चतुरंगुलम्। पृष्ठे च पद्मनाभं च धारयेच्चतुरंगुलम्। दामोदरं गळे पश्चाद्धारयेच्चतुरंगुळम्। ऊर्ध्वपुण्ड्रस्यान्तराळे हरिद्रां धारयेत्सदा। धारणादूर्ध्वपुण्ड्रस्य शरीरं मङ्गळावहम्। इत्यादिवचनेन ललाटकण्ठस्कन्धद्वयप्रदिष्टत्रिकस्थित-षट् पुण्ड्राणां चतुरंगुलपरिमितत्वमुक्तम्। हृदयबाहुमध्यद्वयस्थित-पुण्ड्रत्रयस्य अष्टांगुलपरिमितत्वमुक्तम्। कुक्षिस्थस्थलत्रयस्थ पुण्ड्रत्रयस्य दशांगुलपरिमितत्वमुक्तम्। तत्तत्सपादोर्ध्वपुंड्राणां तत्तत्परिमाण-

प्रतिपादनवत्कुक्ष्यादित्रिकान्ताङ्गेषु तत्तत्पीठपरिमाणविशेषः नोक्तः। चतुरश्रपीठं विलिख्य तदुपरि सपादोर्ध्वपुण्ड्रलेखने वचनोक्तांगुलपरिमाणाधिक्यदोषः प्रसजति, अतः तन्त्रेण कुक्ष्याद्यङ्गेषु व्यंगुलपरिमितं चतुरश्रपीठं परिकल्प्य तन्मध्ये पीठाधोभागमारभ्य पीठाग्रपर्यन्तं परिशेषात् व्यंगुलपरिमितमीषद्विकसितपद्माकारपादं परिकल्प्य तदुपर्युभयपार्श्वयोः ऊर्ध्वाग्रे हरिपादाकारशाखे मध्ये श्रीचूर्णरेखां च धारयन्ति। मण्टपगोपुरप्रासादादिषु विस्तृतत्वात्सपादोर्ध्वपुण्ड्रपीठयोः परिमाणप्रमाणवचनाभावात्, सपादोर्ध्वपुण्ड्रस्य वचनसिद्धत्वाच्च॥

शाण्डिल्यस्मृतौ– पशुपुत्रादिकं सर्वं गृहोपकरणानि च। अंकयेत् शङ्खचक्राभ्यां नाम कुर्याच्च वैष्णवम्॥ इत्यादिवचनरीत्या सपादोर्ध्वपुण्ड्रपार्श्वयोः स्थितयोः शंखचक्रयोः अलङ्कारार्थं पूजनार्थं च विशिष्य पीठपरिकल्पनवत् स्थूलपीठं परिकल्प्य तदुपरि उत्तमाङ्गोपलाळ्यमानसश्रीचूर्णषद्विकसितपद्माकारपादसहितहरिपादद्वयाकारोर्ध्वाग्रशाखासहितोर्ध्वपुण्ड्रं परिकल्पयन्ति। ऊर्ध्वपुण्ड्रं ललाटे तु कुर्वीत चतुरंगुळम्। उदरे हृदि कण्ठे च दशाष्टचतुरंगुळान्। दक्षिणोदरबाहुंसेष्वेवं त्रीणीतरत्र च। आद्यवत्पृष्ठतो द्वे च मूर्ध्नि चैवं त्रयोदश॥ त्रिधा सर्वत्र विस्तारश्चतुस्त्रिद्व्यंगुलक्रमात्। उत्तमो मध्यमो हीनः पार्श्वावंगुळिकौ स्मृताविति॥ भरद्वाजस्मृतिवचनव्याख्याने व्याख्यातृभिः यत्तु दशांगुलप्रमाणन्तु उत्तमोत्तममुच्यते। नवांगुलं मध्यमं स्यादष्टांगुलमतः परम्। सप्तषट्पञ्चभिः पुण्ड्रं मध्यम त्रिविधं भवेदित्यादि ब्रह्माण्डपुराणवचनं तदतिविशालफालवद्विषयं वेदितव्यमित्युक्तरीत्या, नासादिकेशपर्यन्तमित्युक्तया च सपादोर्ध्वपुण्ड्रस्य अंगुलपरिमाणादिकं यथामुखादिविस्तारं कल्पनीयं, सपादोर्ध्वपुण्ड्रं येनोर्ध्वपुण्ड्रं सौम्यं स्यादार्जवं च कृतं भवेत्। तेन कुर्यात् प्रकारेण तादृशं फलदं भवेदिति॥

नाचरेद्वामहस्तेन न नखैरपि कारयेत् । आत्मनैवात्मनोऽङ्गेषु नेतरेण तु कारयेदिति । अयं वामहस्तनिषेधः दक्षिणशक्तविषयः । शक्त्यनुसारेण शास्त्रप्रवृत्तेरिति सच्चरित्ररक्षाद्युक्तरीत्या शास्त्रानुगुण्येन च यथासंभवं ऋजुशोभ्याकारं सश्रीचूर्णं प्रपन्नैर्धार्यम् । अतः अर्चादि-दिव्यमङ्गळविग्रहादिषु यथासंभवं सश्रीचूर्णं सपादोर्ध्वपुण्ड्रं परिकल्प-यन्ति । कौतुकार्चादिव्यमङ्गलविग्रहेषु तिलकपरिकल्पनं अलङ्कारार्थं । लक्ष्मीतन्त्रे एकोनचत्वारिंशाध्याये — बुध्या विरचितास्तास्ता राज-राजोचिताः क्रियाः । अलङ्कारासनस्थाय एते भोगा हि मन्मया इत्युक्तेः अतः यथामुखविस्तारं एकांगुळं नासिकादौ धृत्वेति वसिष्ठोक्तः । एकांगुलपरिमितं कुण्डलीकृतसर्पस्थेत्युक्त्या अनन्तावतार श्रीरामानुज-रूपं ऊर्ध्वपुण्ड्रपादं परिकल्पयन्ति । अतः श्रीकाञ्चीदिव्यदेशदीप-प्रकाशसन्निधौ, तूप्पिल नामकावतारस्थले ब्रह्माण्डपुराणे अहीन्द्र-पुरमाहात्म्ये— अश्वत्थमूले घण्टावतारो मुनिस्तपस्यतीति ॥

श्रीपाद्मपुराणे उत्तरखण्डे उमामहेश्वरसंवादे एकचत्वारिंशा-ध्याये— तस्मिन्कलौ युगे देवि रक्षणार्थं जनस्य वै । लक्ष्मीपतिर्जग-न्नाथः कृपया सर्वजन्तुषु । स्वांशेनैव त्रिधा भूत्वा कलिदोषं निवारयेत् ॥ एको रामानुजो ज्ञेयश्शेषांशस्सर्वशास्त्रवित् । शठकोप इति ख्यातो द्वितीयः कलिपापहृत् ॥ वेङ्कटेशांशको ह्येकः तृतीयः कमलानने । एवं बहुविधाचार्याः पाषण्डच्छेदनः स्मृताः ॥ इति । विष्णुरहस्ये भक्तस्वरूपकथनप्रकरणे— घण्टात्मानं समुज्ज्वलं निगमान्त-गुरुं बुधम् । इत्यादिप्रमाणरीत्या घण्टावतारभूत श्रीमन्निगमान्त-गुर्वर्चादिव्यमङ्गळविग्रहादौ सश्रीचूर्णं सपादोर्ध्वपुण्ड्रं अद्यापि समुज्ज्व-लति । विस्तरस्तु ऊर्ध्वपुण्ड्रविजय, ऊर्ध्वपुण्ड्रनिर्णयग्रन्थादौ द्रष्टव्यः ॥

श्वेतमृत्तिकया, उर्ध्वपुण्ड्रधारणे प्रमाणं सच्चरित्ररक्षायां,

स्थलान्तरे– 'नाळिकेरार्धभागेन. तदक्षियुगळेन च कमठाकृतिना पुण्डजलं पात्रनपावनमित्यादि ॥

ऊर्ध्वपुण्ड्रधारणावश्यकत्वे प्रमाणं, सच्चरित्ररक्षायां ब्रह्मराते–
सर्ववर्णेषु यद्भक्ताः कुर्वीरन्नूर्ध्वपुण्ड्रकम । ब्रह्मचारी गृहस्थो वा, वानप्रस्थोऽथवा यतिः ॥ अवश्यं धारयेत्पुण्यं ऊर्ध्वपुण्ड्रं सुशोभनम् । इति । वासिष्ठसंहितायां प्रथमेऽध्याये–यथा चर्मा न दृश्यन्ते तथोर्ध्वं पुण्ड्रमाचरेत् । विष्णुपादस्थितिग्राह्यमूर्ध्वपुण्ड्रं तथाऽऽचरेत् ॥ इति ।

विष्णुस्मृतौ–'यद्भक्तो धारयेन्नित्यमूर्ध्वपुण्ड्रमतन्द्रितः । ऊर्ध्वगत्यां तु यस्येच्छा, तस्योर्ध्वं पुण्ड्रमुच्यते । ऊर्ध्वं गन्त्वा तु देवत्वं प्राप्नुयाद्धि न संशयः ॥ इति ।

श्रीनारदीये सप्ततितमेऽध्याये– ऊर्ध्वं नयति यत्पुण्ड्रं प्राणिनः पापकारिणः । तस्याख्या ह्यूर्ध्वपुण्ड्रेति तस्मात्तद्धारयेत् बुधः ॥ इति । ऊर्ध्वं, ऊर्ध्वलोकं पुण्ड्रयति पापकारिणः गमयतीति ऊर्ध्वपुण्ड्रं पुण्ड्र-गतौ इति धातुः ॥

सपादोर्ध्वपुण्ड्रधारणे प्रमाणं ऋग्वेदे– ब्रह्मनाडीं समारभ्य केशावधिमृदा न्यसेत् । सच्छिद्रमूर्ध्वपुण्ड्रं तु हरिद्रासारसंयुतम् । पुण्ड्रं तु धारयेद्यस्तु मुक्तिभागी भवेन्नरः ॥ इति ।

बृहत्सेनसंहितायां दिलीपनारदसंवादे चन्द्रकान्तोपाख्याने–
ज्योतिष्टोमादियज्ञानां कर्तारस्तीर्थमज्जकाः । सर्वकर्मधृतास्ते हि सर्वेषामपि पावनाः ॥ नासाग्रपादसंयुक्तपुण्ड्रयुक्तास्सदैव हि । न तेषां स्पर्शदोषस्स्यात्तेषां धर्मास्ततो नहि ॥ सदा ते योग्यवर्याश्च मम भक्तास्तथैव हि । इति । नासा नासेन्द्रियं अग्रे यस्य तत् नासाग्रं नासानाळमित्यर्थः ॥

वैखानसे—नासाग्रभागे कृतपीठपुण्ड्रणं पवित्रपाणिं खलु गर्भवैष्णवम्। नयेत्स्वलोकं सकृदर्चनाद्वा खगेन्द्रकेतुस्सुरसङ्घपूज्यः॥ इति। तत्रैव—हर्यर्चकास्स्युस्त हि गर्भवैष्णवा भुवो ऽर्ध्वपुण्ड्राणि सपीठकानि। मच्छिष्यवर्गो हरिमेति नान्यथा यद्योगिनां दुर्लभमव्ययं च॥ इति।

पाद्मोत्तरे एकत्रिंशाध्याये—आरभ्य नासिकामूलं ललाटान्तं सुविन्यसेत्। समारभ्य भ्रुवोर्मध्यं सान्तरालं प्रकल्पयेत्॥ इति।

भार्गवपुराणे उत्तरखण्डे दशमेऽध्याये भक्तिसारमहायोगिमाहात्म्ये नरं प्रति नारायणः—पद्मासनसमासीनो द्वादशाङ्गेषु चाङ्कितः। केशवादिद्वादशभिर्नामभिः योगिसत्तमः। सम्यग्धृत्वोर्ध्वपुण्ड्राणि जपन्नष्टाक्षरं मनुम्। स्थित्वाऽत्र कतिचिन्मासान् ततः काञ्चीमुपागमत्॥ इति। योगिसत्तमः திருமழிசைப்பிரான் नामकभक्तिसारयोगीत्यर्थः। अत्र श्रीवेङ्कटगिरावित्यर्थः॥

कारणसंहितायां ब्रह्माणं प्रति भगवद्वचनम्—सपादपुण्ड्राङ्कितफालदेशास्सुतप्तचक्राङ्कितबाहुमूलाः। अष्टाक्षरद्वादशमन्त्रजप्या मद्भक्तवर्याः खलु भूतदेवाः॥ इत्यादि। सोर्ध्वपुण्ड्रमुखं दृष्ट्वा व्रतं चान्द्रायणं चरेत्। इत्याद्यूर्ध्वपुण्ड्रनिषेधकवचनं अच्छिद्रोर्ध्वपुण्ड्रनिषेधपरम्। न तु सात्विकसच्छिद्रसश्रीचूर्णसपादश्वेतमृदूर्ध्वपुण्ड्रनिषेधपरम्॥

पाद्मपुराणे एकत्रिंशाध्याये शङ्करः—अच्छिद्रमूर्ध्वपुंड्रं तु ये कुर्वन्ति द्विजाधमाः। तेषां ललाटे सततं शुनः पादो न संशयः॥ इति।

बृहद्भारद्वाजधर्मशास्त्रे द्वितीयेऽध्याये—पादहीनोर्ध्वपुंड्राणां धारणाच्च विशेषतः। पुंड्रान्तराळे भस्मादिधारणात्पतितो भवेत्॥ इति।

स्कान्दे शिवस्कन्दसंवादे— आमरं मृत्स्नया पुण्ड्रं चन्दनेनार्ष-मुच्यते । भसितेनासुरं पुण्ड्रं मानवं कुङ्कुमादिभिः ॥ आमरं सात्त्विकं पुण्ड्रमार्षं राजसमिष्यते । आसुरं तामसं तुर्यं तथा राजस-तामसम् ॥ इति ।

पराशरमाधवीये— श्यामं शान्तिकरं प्रोक्तं रक्तं वश्यकरं भवेत् । श्रीकरं पीतमित्याहुर्वैष्णवं श्वेतमुच्यते ॥ इति ।

वाराहे ज्ञानकाण्डे— ऊर्ध्वपुण्ड्रमालिखेत्तस्मात् द्विरेखं भवतीति हि । वाजिनां श्रुतिरभ्यासात्साटोपं स्फुटमाह हि ॥ धृतोर्ध्वपुण्ड्र इत्याद्यास्तथान्याः श्रुतयो विदुः । इति ।

नारदीयपुराणे— 'भूत्यै न प्रमदितव्यमिति, भस्मादिधारणं निषिद्धम् । तत्र श्वेतमृदा हि ऊर्ध्वपुण्ड्रं विधीयते । सान्तरालं द्विरेखं तु मध्ये हारिद्रशोभितम् ॥ केशवाद्यैर्ललाटादौ धार्यं विप्रादिभि-स्सदा । इति ।

बृहन्नारदीये अत्रिः— सपादमूर्ध्वपुण्ड्रं तु द्विषट्स्थानेषु विन्य-सेत् । पद्माक्षतुलसीधाम धारयित्वा गळे सदा । स एव वल्लभो विष्णोस्तस्य लक्ष्मीः प्रसीदतीत्याद्युक्तेः ॥

कालाग्निरुद्रोपनिषदाद्युक्तमपि भस्मधारणं तामसं शैवशाक्तादि-विषयम् श्येनविधितुल्यत्वादनादरणीयम् ॥

परमवैदिकसिद्धान्ततत्त्वरत्नाकरे गारुडे — तामसेषु पुराणेषु मोहनार्थं सुरद्विषाम् । त्रिपुण्ड्रधारणं प्रोक्तं तामसैर्मुनिसत्तमैः । तामसानि पुराणानि दृष्ट्वा मोहाच्च यो द्विजः । त्रिपुण्ड्रधारणं कृत्वा तमस्यन्धे निमज्जति ॥ इति ।

शिवाधिक्यरत्नावळी निरसनग्रन्थे तैत्तिरीयश्रुतौ— त्रिपुण्ड्-

धारिणो ब्राह्मणाश्शूद्रधर्माणो भवेयुरितीति। कालाग्निरुद्रोपनिषदि– अग्निरिति भस्म, वायुरिति भस्म, जलमिति भस्म, इत्यादिना अभिमन्त्र्य त्र्यम्बकमन्त्रेण तिस्रो रेखाः प्रकुर्वीत। व्रतमेतच्छाम्भवमिति ॥

नारदीयपुराणे– भस्मना धारणं सर्वेश्शैवानां परिगीयते। न केवलानां विप्राणां, वैष्णवानां तु दूरतः। भस्मोद्धूलनमेवापि, तिर्यक् पुण्ड्रस्य धारणम् ॥ शैवदीक्षापराणां स्यान्नान्येषामिति निर्णयः। इत्याद्युक्तेः ॥

श्रीचूर्णधारणे प्रमाणम्। नारदीयश्वेतमृत्तिकोपनिषदि– तथैव मध्यावकाशोऽङ्गुलादन्यूनः। सश्रीः प्रतिष्ठायै श्रीर्हरिद्रा यतो हरिं द्रावयति तत श्रीचूर्णम्। श्रियावधूतं विष्णुना वा आदित्यवर्ण इति। श्रीफले धारयेत। तज्जले श्रीबीजेन संस्पृश्य संमृज्य तत्सूक्ष्मरेखां धारयेत् श्रीमान्भवतीति ॥

वृद्धशौनकः– अभिषिक्तं हि देवस्य त्रिगुणो लोकगुरोर्द्विजः श्रीचूर्णं धारयेन्नित्यं पुण्ड्रमध्ये यथाविधि ॥ निशाचूर्णं विना यस्तु ऊर्ध्वपुण्ड्रं दधाति चेत्। तत्पुण्ड्रमशुभं प्राहुर्मुनयो ब्रह्मवादिनः ॥ इति।

शौनकः– तदेव धारयेन्नित्यमूर्ध्वपुण्ड्रस्य मध्यतः। अभिषिक्तं हरेश्चूर्णं प्रत्यहं धारयेद्द्विजः। स सर्वपापनिर्मुक्तः परमं पदमश्नुते ॥ श्रीचूर्णं धारयेन्मोहान्नाभिषिच्य श्रियःपतेः। स सर्वयातनाभोगी न प्राप्नोति परां गतिमिति ॥

पाञ्चरात्रे– सान्तरालोर्ध्वपुण्ड्रस्य मध्ये श्रीशेषधामनि। हरिद्रासारसंभूतरजसा धारयेत् श्रियम् ॥ इति। पराशरः– ऊर्ध्वपुण्ड्रस्य मध्ये तु हरिद्राचूर्णमुत्तमम्। लक्ष्मीनिवाससिद्ध्यर्थं ललाटादिषु धारयेत् ॥ इति।

श्रीपाञ्चरात्रे खगेश्वरसंहितायां श्रीचूर्णविधिनामके चत्वारिंशा-ऽध्याये भगवद्वचनम्—चण्डालो वा खगेशान सर्वपापसमन्वितः। सर्वपापविशुद्धात्मा श्रीचूर्णं बिभृयाद्यदि। ब्राह्मणो वा खगाधीश राजानो वणिजोऽपि वा ॥ शूद्रो वा बिभृयाच्चूर्णं प्रतिलोमानु-लोमजाः। ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ भिक्षुकः ॥ श्रीचूर्ण-धारी न भवेत्तन्मुखं नावलोकयेत्। इति।

संहितायां—ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः। श्रीचूर्णमेतैस्सततं धार्यं श्रीशस्य तुष्टये ॥ इति।

श्रीपाञ्चराले—ऊर्ध्वपुण्ड्रस्य मध्ये तु अन्यत् द्रव्यं न धारयेत्। विष्णुबिम्बेन संस्पृष्टां हरिद्रां धारयेत् द्विजः ॥

सनत्कुमारसंहितायां—ऊर्ध्वपुण्ड्रं मृदा धार्यं सच्छिद्रं सौम्य-मेव च। तदलङ्करणार्थैव हरिद्रां तत्र धारयेत् ॥ इति। संहितान्तरे—एवं द्वादश पुण्ड्राणि ब्राह्मणः सततं धरेत् ॥ अन्तराळेषु सर्वेषु हारिद्रां धारयेत् श्रियम्। इति ॥

काश्यपः—ऊर्ध्वपुण्ड्रस्य मध्ये तु हरिद्राचूर्णमुत्तमम्। सर्वै-राश्रमिभिर्धार्यं सर्ववर्णैश्च सर्वदा ॥ इति।

वैखानसे अत्रिप्रोक्तेऽखिलाधिकारे चतुश्शताधिकद्वादशा-ध्याये—या सा पद्मा इति लक्ष्मीं प्रार्थ्य निशाचूर्णमादाय श्रियै जात इति घर्षयित्वा चिन्तामणिबीजं लिखित्वा गायत्र्या ललाटमध्ये वेणुपत्राकृति धारयेत् तेन द्वादशोर्ध्वपुण्ड्रमध्ये च धारयेत् ॥ इति।

अत्रिस्मृतौ—ततो दिव्यं च हारिद्रं सामोदतुलसीदळम्। मन्त्रेण धारयेच्चूर्णं पुण्ड्रेषु द्वादशस्वपि ॥ इति।

संग्रहे—विलोक्य दर्पणं विद्वानूर्ध्वपुण्ड्रं मनोहरम्। कुर्या-

न्मङ्गळमाकाङ्क्षन् हरिद्राचूर्णसंयुतम् ॥ एवं धृत्वा विधानेन श्रीचूर्णं द्विजसत्तमः । प्रत्यहं धारयेदूर्ध्वपुण्ड्रमध्ये यथाविधि ॥ अवोमेध्या-त्समारभ्य श्रीचूर्णं विधिनिर्मितम् । इत्यादि ॥

सश्रीचूर्णसवादोर्ध्वपुण्ड्रधारणकाले तत्तन्मूर्तिरूपनामादिध्यान-कर्तव्यत्वे प्रमाणम् ॥

पाद्मपुराणे उत्तरखण्डे ऊर्ध्वपुण्ड्रविधिनामकैकत्रिंशाध्याये— एवं द्वादशपुण्ड्राणि ब्राह्मणः सततं धरेत् । तत्तन्मन्त्रेषु तन्मूर्तिं ध्यात्वा मन्त्रेण धारयेत् । अन्तरालेषु सर्वेषु हरिद्रां धारयेत् श्रियम् ॥ इति ।

पारमेष्ठ्यसंहितायां— धृतोर्ध्वपुण्ड्रो विधिवन्न्यस्यमानानि द्वादश नमोन्तान्यञ्जलिं कुर्यान्नामान्युक्त्वा यथाक्रमम् ॥ इति ।

पराशरः — श्रीदेवीत्यादिमन्त्राणां अर्थं ध्यायेच्च नामतः । श्रीचूर्णं धारयेन्नित्यं पुण्ड्रमध्ये द्विजोत्तम ॥

भगवच्छास्त्रे— एवं यः कुरुते पुण्ड्रे देवताध्यानमन्वहम् । तस्य देहे हरिस्तिष्ठत्यनिशं रमया सह ॥ इति । तत्तन्मूर्त्यादि ध्यानश्लोकाः ॥

चतुश्चक्रं नमस्यामि केशवं कनकप्रभम् ।
ललाटे सततं देव्या श्रिया सह विराजितम् । १ ॥

अमृतोद्भवया देव्या समाश्लिष्टमथोदरे ।
नारायणं घनश्यामं चतुश्शङ्खं नमाम्यहम् ॥ २ ॥

नित्यं कमलयाश्लिष्टं हृदयेऽहं दयांबुधिम् ।
माधवं मणिभङ्गाभं चिन्तयामि चतुर्गदम् ॥ ३ ॥

देव्या च चन्द्रशोभिन्या देवं कण्ठे विराजितम् ।
चन्द्रहासं चतुश्शार्ङ्गं गोविन्दमभिसंश्रये ॥ ४ ॥

विष्णुपत्न्याख्यया देव्या कुक्षौ दक्षिणपार्श्वके ।
विष्णुं चतुर्हलं वन्दे पद्मकिञ्जल्कसन्निभम् ॥ ५ ॥

वैष्णवीसंज्ञया देव्या कलितं दक्षिणे भुजे ।
चतुर्मुसलमब्जाभं संश्रये मधुसूदनम् ॥ ६ ॥

दक्षिणांसे दयाशाधिं वरारोहाधिपं प्रभुम् ।
अग्निवर्णं चतुःखङ्गं भावयामि त्रिविक्रमम् ॥ ७ ॥

हरिप्रियापतिं कुक्षौ वामपार्श्वे दयानिधिम् ।
वामनं बालसूर्याभं चतुर्वज्रं विभावये ॥ ८ ॥

वामबाहौ, महाबाहुं शार्ङ्गिणीपतिमव्ययम् ।
श्रीधरं पुण्डरीकाभं चतुःपट्टसमाश्रये ॥ ९ ॥

देवदेव्याख्यया देव्या श्रितं वामांससंश्रितम् ।
चतुर्मुद्गरमभ्येमि हृषीकेशं तटित्प्रभम् ॥ १० ॥

पृष्ठे संहृष्टया देव्या महालक्ष्म्या विराजितम् ।
पञ्चायुधं पद्मनाभं नमस्याम्यर्करोचिषम् ॥ ११ ॥

सदाककुद्गतं लोकसुन्दरीपतिमव्ययम् ।
दामोदरं चतुःपाशमिन्द्रकोपनिभं भजे ॥ १२ ॥

इति सांजलिबन्धो वदन् ललाटादित्रिकान्तस्थानेषु ध्यायेत् । सर्वाभीष्टप्रदार्थांशं मूर्ध्नि सर्वायुधं विभुम् । वासुदेवमुपासेऽहं पूर्णेन्दयुतसन्निभम् । इति श्वेतमृत्तिका प्रक्षालनतोयेन शिरसि मार्जयेत् । न तु पुण्ड्रं धारयेत् । मूर्ध्नि पुण्ड्रधारण निषेधस्य पूर्वमेवोक्तत्वात् ॥

श्रीचूर्णस्य बिल्व करण्डनिक्षेपे प्रमाणं संहितायां – कृत्वा करण्डं बिल्वस्य फलं पक्कं मनोहरम्। हारिद्रं पूरयेच्चूर्णं लक्ष्मीरूपमनुत्तमम्। फलमन्यत्र बिल्वस्य यश्चूर्णं पूरयेन्नरः। अवैष्णवस्स-विज्ञेय श्रीस्तमेव व्यपोहति, इति ॥

महारत्नकोशे, ब्रह्मनारदसंवादे–आराध्य च ततश्चूर्णैरभिषिच्य-यथाविधि। तच्चूर्णं बिल्वकारण्डे निक्षिपेत् धारणाय च। नाळिकेर करण्डे तु यश्चूर्णं निक्षिपेद्द्विजः। तच्चूर्णं कृमिभिस्तुल्यं धृत्वा पाप-मवाप्नुयात्। श्रीफलस्य करण्डे च श्रीचूर्णं निक्षिपेत्सदा। श्रीचूर्णे निक्षिपेल्लक्ष्मीं तस्मात्तद्धारयेत् द्विजः॥ नारायणसंहितायां – नाळि-केरकरण्डे तु कपित्थस्य फलेऽपि वा। तुम्बी फले वाप्यन्यत्र श्रीचूर्णं तु न निक्षिपेत्। निक्षिपेद्यदि मूढात्मा सद्यश्चण्डालतां व्रजेत्। तस्मात्सर्वप्रयत्नेन, फले बिल्वे विनिक्षिपेत्॥ इत्यादि। 'श्रीमत्पवित्रपद्माक्षतुलसीमणिमालाधारणे प्रमाणम्। महोपनिषत् श्रुतौ– शङ्खचक्रधरो विद्वान् मालां तुलसिजां दधत्॥ सजीवन्मुक्तो भवतीति॥

आग्नेये–'एवं धृत्वा चोर्ध्वपुण्ड्रं श्रीचूर्णसहितं द्विजः। पद्माक्षतुलसीमालां धारयेद्भक्तिसंयुतः॥ श्रीमत्पवित्रं सततं धारयेत्तु यथाक्रमम्। इति ॥

वासिष्ठसंहितायां – ततः पद्माक्षतुलसीमालिकां धारयेद्गळे। श्रीमत्पवित्रमतुलं देवदेवेन धारितम्॥ तयोरुपरि सन्धार्य सर्वपाप-प्रणाशनम्। अप्रतिष्ठितमालां यो बिभर्ति, यदि मोहितः। व्यर्थं भवति तत्सर्वं नित्यनैमित्तिकादिकम्॥ चतुस्सप्ततिपद्माक्षमष्टोत्तरशतं स्मृतम्। तुलसीमालिकायास्तां सततं धारयेत् द्विजः॥ यथा पतिव्रता साध्वी सर्वाभरणभूषिता। पतिशुश्रूषणं कुर्यात् सावधानेन

चेतसा ॥ तद्वच्चक्रादिचिह्नैस्तु चिह्नितो द्विजसत्तमः । पद्माक्षतुलसी-मालां श्रीपवित्रं यथाक्रमम् । सन्धार्य नित्यकर्माणि विष्णोः प्रीत्यर्थ-माचरेत् ॥ इति ।

ब्राह्मे-पद्माक्षतुलसीमालां वैष्णवो धारयेत् द्विजः ॥ इति ।

पराशरः—धृत्वा कण्ठे स्वशिरसि, पवित्रं विष्णुधारितम् । श्रीकृष्णतुलसीकाष्ठमणिमालां गले तथा ॥ इति ।

व्यासः—'पद्माक्षमालया सार्धं तुलसीमालिकां शुभाम् । कण्ठे त्रिकं समारभ्य नित्यं मन्त्रेण संयुताम् ॥ धारयेन्नाभिपर्यन्तं त्याज्यं न्यूनं ततोऽधिकम् । पद्माक्षं विष्णुदैवत्यं तुलसी श्रीः प्रकीर्तिता ॥ तस्माद्द्वयं सदा धार्यमूर्ध्वपुण्ड्रपरद्विजैः । जपहोमार्चनाद्येषु विशेषेण तु धारयेत् ॥ उपवीतं, शिखाबन्धमूर्ध्वपुण्ड्रं तथैव च । पद्माक्षमालां कौशेयं सततं धारयेत् द्विजः' ॥ इति ।

पुराणे—'शान्तये पुष्टये मुक्त्यै तुलसी काष्ठजो मणिः । सर्वसिद्धिप्रदः प्रासो मणिर्धार्यः श्रियै बुधैः ॥ तुलसीकाष्ठमालां वै, पद्माक्षमणिमालिकाम् ॥ कण्ठादिनाभिपर्यन्तं धारयेद्वैष्णवोत्तमः । अष्टोत्तरशतं मालामनेन स्कन्धलम्बिताम् । तुलसीपद्ममणिभिर्धारये-दुपवीतवत् ॥

वामनपुराणे—भोजने शयने स्नाने मलमूत्रविसर्जने । तुलसीकाष्ठमालाया धारणात्पतितो भवेत् ॥ विधिवद्ग्रथिता सूत्रे माला तु तुलसी शुभा । ... ...

चन्दनाभयहस्तसेवने प्रमाणम् । वासुदेवसंहितायां—अनन्य-साधनैस्सर्वैर्मद्भक्तैर्मत्प्रियैश्शुभैः । प्रपन्नैः प्रत्यहं सेव्या चन्दन-प्रतिबिम्बिता ॥ मदीयाऽभयमुद्रा या सा सर्वफलदा नृणाम् । नेत्रयोरंसयोर्नित्यं हृदि मूर्ध्नि क्रमेण तु ॥ इत्यादि ।

चन्दनप्रतिबिम्बित श्रीपादयुगळचन्दनप्रतिबिम्बितलक्ष्मीसेवने प्रमाणम्। वासुदेवसंहितायाम्—एवं मच्चरणद्वन्द्वं चन्दनप्रतिबिम्बितम्। सेव्यं प्रपन्नैर्मद्भक्तैस्तथा लक्ष्मीर्मम प्रिया ॥ मद्भक्ता मत्प्रिया नित्यं मद्वक्षःस्थलवासिनी। जननी प्राणिजातस्य चन्दनप्रतिबिम्बिता। सर्वैः प्रपन्नैः संसेव्या मद्भक्तैर्नियतैस्सदा ॥ इत्यादि।

श्रीपादुकाग्रहणविषये, पादाङ्कितपट्टवस्त्रग्रहणविषये प्रमाणम् श्रीपाञ्चरात्रे पाद्मसंहितायाम्—ब्रह्मविद्वैष्णवो यस्तु याति वैकुण्ठमुत्तमम्। तस्य पादप्रतिकृतिर्मुमुक्षोरुपजीविका ॥

तत्रैव वैनतेयवचनम्—ब्रह्मविद्वैष्णवो यो वै वैकुण्ठाय स गच्छति। तच्छिष्याणां च सुधियां पूज्यौ तच्चरणौ भृशम् ॥

विष्णुः—केवलं वैष्णवो यत्र याति ब्रह्मपुरीं द्विजः। तत्पदाङ्कितभूरेणुः पूज्यते सर्वदेहिभिः ॥ इति। तत्रैव, रजतेन सुवर्णेन कौशेयेन मृदाऽथवा। दारुणा ब्रह्मवित्पादौ ग्राह्यौ वैष्णवसत्तमैः ॥ इत्यादि ॥

तीर्थवाटिकातीर्थग्रहणे प्रमाणम्। हारीतः—वैष्णवोत्तमपादाब्जतीर्थं देही बुधो यदि ॥ शुभ्रया वा मृदा गृह्य पिबेद्याति परां गतिम्। तुलसीमृत्तिकामिश्रं वैष्णवोत्तमपादजम्। तीर्थं पिबेच्च यो विप्रस्स याति हरिमन्दिरम् ॥ इति ॥

पाञ्चरात्रे भगवद्वचनम्—मदङ्घ्रितीर्थपृषता स्पृष्टा शुद्धा हि मृत्तिका। मत्पादाब्जानुबन्धेन संहरत्येव संसृतिम् ॥ इत्यादि।

संकटविषये, नाळिकेरकाण्डे श्रीचूर्णनिक्षेपस्य प्रमाणम्। पाञ्चरात्रे—न सुवर्णादिभिः कुर्यान्न दार्वा बिल्वकेन वा। नारिकेळफलस्यैव श्रीचूर्णं पात्रमुच्यते ॥ इत्यादि।

संकटविषये, नीरोर्ध्वपुण्ड्रधारणे ललाटे, त्रिकोर्ध्वपुण्ड्रधारणे च प्रमाणम्। मृद्लाभे, त्वरायां वा, कार्यन्नीरोर्ध्वपुण्ड्रकम् ॥ ललाटपुण्ड्रमपि वा सर्वथा धारयेत् द्विजः। दामोदरं केशवं च पुण्ड्रेषु न परित्यजेत् ॥ इति।

स्थलान्तरे, वासिष्ठसंहितायां– अशक्तौ सर्वपुण्ड्राणां धारयेत् द्विजसत्तमः। दामोदरं केशवं च कदापि न परित्यजेत् ॥ इत्यादि।

श्रीमृत्तिकापेटिका–तीर्थपात्रोद्धरणी कांस्यदर्पण, सश्रीचूर्ण, सपादोर्ध्वपुण्ड्रधारणादीनां प्रमाणम्। पराशरसंहितायां, तृतीयाध्याये–विष्णुपादक्षालितान्तर्गङ्गादिविरजाजलम्। सरिद्वरा च कावेरी चन्द्रपुष्करिणीजलम् ॥ गुरुपादोदकं तद्वद्गुरुसाम्यादिकं तथा। स्मृत्वा स्नानं प्रकुर्वीत इन्द्रद्युम्नाख्यतीर्थकम् ॥ नदीतीरं समागम्य मौनेन द्वयमुच्चरन्। कौपीनं योक्त्रमुत्तर्यं सुश्वेतं धारयेत्ततः। कार्पासं, पट्टवस्त्रं च धारयेदथ कर्पटम्। प्रक्षाळ्य पादावाचम्य शुद्धपात्रे जलं हरेत् ॥

शुद्धस्थाने शुचौ देशे स्थित्वा शुद्धासने ततः। धारयेत् प्राङ्मुखो भूत्वा श्रीमृत्स्नाद्यादिपेटिकाम्। हस्तौ प्रक्षाळ्य शुद्धात्मा गृहीत्वा दक्षिणे करे। सौवर्णेन च रौप्येण नाळिकेरेण मुख्यतः ॥ कृत्वा चोद्धरणीपात्रं वेत्रदार्वादिपीठके। जलं संपूर्य तत्पात्रे उद्धरिण्या च तद्धरेत् ॥ किंचिज्जलं वामहस्ते धृत्वा मूलमनुस्मरन्। प्रपत्तिफलसिद्ध्यर्थं विष्णुसायुज्यहेतवे ॥ पङ्कीकृत्य द्वयेनैव शुद्धां स्निग्धां तु मृत्तिकाम्। तर्जन्या तद्गृहीत्वाथ ललाटे धारयेत् द्विजः ॥

दृष्ट्वा सुदर्पणं कांस्यं गणना मूलमादितः। ऊर्ध्वपुण्ड्रमृजुं सौम्यं हरिपादाकृति शुचि। नासादौ त्र्यंगुलं पादं मध्ये सार्धाङ्गुलं भवेत्। पार्श्वमङ्गुळमात्रं तु सुस्पष्टं धारयेत् द्विजः ॥ विष्ण्वर्पितं

रक्तवर्णं (रौक्म) हरिद्राचूर्णमुत्तमम् । लक्ष्मीनिवाससिद्ध्यर्थं दीपाकारं तु सूक्ष्मकम् । ऊर्ध्वपुण्ड्रस्य मध्ये तु ललाटे धारयेत् द्विजः ॥ ओं नमः केशवादीनामर्थं ध्यायन् चतुर्मुख । धृत्वा दामोदरान्तं वै शेषं तु शिरसि न्यसेत् ॥

धृत्वा कण्ठे स्वशिरसि पवित्रं विष्णुधारितम् । श्रीकृष्णतुलसीकाष्ठमणिमालांगले तथा ॥ सह पद्माक्षमालां च (मुक्ताहारादिकं) मुक्त्वा मोहादिकं शुचिः । शिखायां विष्णुनिर्माल्यं चन्दनाद्यनुलेपनम् । अहर्निशं धारयतो न पुनर्जननं भवेत् ॥ ये कण्ठलग्नतुलसीनलिनाक्षमाला ये बाहुमूलपरिचिह्नितशङ्खचक्राः । ये वा ललाटफलके लसदूर्ध्वपुण्ड्राः ते वैष्णवा भुवनमाशु पवित्रयन्ति । श्मश्रुहीनशिखाधारी सच्छिद्रश्वेतपुण्ड्रधृक् ॥ स वै प्रपन्न इत्युक्तस्स वै भागवतोत्तमः । एकान्ती शुचिदेशे वै तस्मादाचारमाचरेत् ॥

पुनः प्रक्षाळ्य हस्तौ तु नाळिकेराख्यपात्रके । जलं किंचित् गृहीत्वा च जले किञ्चिद्विनिश्रितम् । पादतीर्थं च गुरूणां गुरूणां च हरेस्तथा ॥ प्रपन्नः परमैकान्ती विज्ञानात्मा विशुद्धये । गङ्गागतं च मृत्तोयं पादतीर्थं च मृत्स्नया ॥ गुरुसाम्यादितीर्थं च पिबेत् ज्ञानात्मशुद्धये । प्रक्षाळ्य पादहस्तादीन् सम्यक् संशोध्य वारिणा । विष्णोस्तत्पादतीर्थस्य वाटिका लक्षणे शृणु ॥

बिल्वमूलगतां वापि तुलसीमूलमृत्तिकाम् । संशोध्य चूर्णयित्वाथ मूलमन्त्रेण मन्त्रवित् ॥ विष्णुपादोदकेनैव पङ्कीकृत्य हरिं स्मरन् । सम्यगामलकाकारं वटकं कारयेच्छुचि ॥ छायाशुष्कं शुचौ कृत्वा गुरुपादोदकं तथा । प्रत्येकं बन्धयेद्धीमान् वटीं वस्त्रादिना सदा ॥ मृत्तिकादिसमायुक्तं पेटिकायां विनिक्षिपेत् । नित्यं तद्वटकं

सम्यक् पूर्वोक्तविधिना पिबेत् ॥ पूर्वोक्तं तत्सदा विष्णोर्निशाचूर्णं द्विजादिमः । सम्यक् बिल्वकरण्डे वै निक्षिप्य द्विजसत्तमः ॥ श्राह्यं तत्पेटिकायां तु तत्करण्डं विनिक्षिपेत् । नालिकेराख्यपात्रादि-पेटिकायां च निक्षिपेत् ॥ तत्पेटिकायां निक्षिप्य दर्पणं कांस्यमुत्तमम् । पुनस्तत्पेटिकां बध्वा जपेत् गुरुपरम्पराम् ॥ मूलमन्त्रं मन्त्ररत्नं चरमश्लोकपञ्चकम् । श्रीमद्वराहचरमं श्रीकृष्णचरमं तथा । श्रीराम-चरमं तद्वत् श्रीरङ्गचरमं तथा ॥ सुदर्शनाख्यचरमं सकृत् ध्यायं तथोच्चरेत् ॥ कुर्यात्सूर्येदियात्पूर्वं सन्ध्यावन्दनकर्म च ॥ इत्यादि ।

अत्र गुरुपरम्परापूर्वकं मूलमन्त्रं मन्त्ररत्नं श्रीकृष्णचरमश्लोक, श्रीरामचरमश्लोक श्रीवराहचरमश्लोकद्वयानुसन्धानमेव शिष्टाचारसिद्ध-मिति बोध्यम् ॥

कात्यायनः – नासिकादेशमूले तु पीठं कृत्वा सवर्तुलम् । तस्योपरि न्यसेत्पुण्ड्रं केशान्तं धारयेत्सुधीः ॥ इति ।

काश्यपः – सपादपुण्ड्राणि करोति भक्त्या यः पूजयेत्तार्क्ष्य-पताकधारिणम् । तदंशभूतो हरिरेव सन्ततं तत्कार्यसिद्धिं विदधाति नान्यथा ॥ इति ।

कारणसंहितायां, ब्रह्माणं प्रति भगवद्वचनम् – सपादपुण्ड्रा-ङ्कितफालदेशाः सुतप्तचक्राङ्कितबाहुमूलाः । इति ॥

तथा अन्यत्रापि, पाञ्चरात्रे – नासादौ द्व्यंगुळं पीठं तत्पार्श्वे तूर्ध्वपुण्ड्रकम् । द्व्यंगुळं त्र्यंगुळं वापि सान्तराळं प्रकल्पयेत् ॥ इति ।

पाद्मपुराणे – ऊर्ध्वपुण्ड्रस्य मध्ये तु विशाले पादसंयुते । लक्ष्म्या सार्धं समासीनो रमेऽहं तत्र निश्चितः ॥ सपादमूर्ध्वपुण्ड्रं तु धारयन्ति च ये नराः । तेषां ललाटे सततं सर्वतीर्थं च तिष्ठति ॥ इति ।

वामनपुराणे— ऊर्ध्वपुण्ड्रं पादयुक्तं ललाटे यस्य दृश्यते । चण्डालोऽपि विशुद्धात्मा पूज्य एव न संशयः ॥ इति ।

श्रीकूर्ममाहात्म्ये दशदशेऽध्याये, शङ्खं प्रति भगवद्वचनम्—किं वेदैः किं तपोभिश्च किं यज्ञैस्तीर्थसेवनैः । सपादपुण्ड्रमात्रेण ममाभेदा द्विजाश्च ते ॥ इत्यादि ।

अतः प्रपन्नैः सश्रीचूर्णं किञ्चित्फुल्लपद्मकुड्मलाकारपादसहितं हरिपादद्वयाकारमूर्ध्वपुण्ड्रमेव धार्यम् ॥

इति सदनुष्ठानदर्पणे सपादोर्ध्वपुण्ड्रधारणविषयो नाम षष्ठप्रतिफलनम् ॥

---

सदनुष्ठानदर्पणे संध्यायां जपारम्भात्पूर्वं भागवतप्रणामविषयो नाम

## ॥ सप्तमं प्रतिफलनम् ॥

---

संध्यादौ प्रपन्नानां जपारम्भात्पूर्वं भागवतवन्दनमुपपन्नं, वचनात्, शिष्टाचाराच्च । तथाहि संध्यादौ मार्जनादितर्पणान्तात्संध्यावन्दनकर्मणोऽनन्तरं जपारम्भात्पूर्वं भागवतैः । वैष्णवो वैष्णवं दृष्ट्वा दण्डवत्प्रणमेद् भुवि । तयोर्मध्यगतो विष्णुः शङ्खचक्रगदाधरः ॥ शेषत्वं प्रणवे ज्ञात्वा पारतन्त्र्यं नमः पदे । भजन्त्यनन्योन्यदासत्वं स्वतन्त्रस्वामिशासनात् ॥ श्रीवत्साङ्कमिश्रश्रीसूक्तौ — कैङ्कर्यनित्यनिरतैर्भवदेकभोगैर्नित्यैरनुक्षणनवीनरसार्द्रभावैः । नित्याभिवाञ्छितपरस्परनीचभावैर्मद्दैवतैः परिजनैस्तव संगसीय ॥ इत्याद्यनुसारेण मिथोवन्दनं क्रियते । यतः वैद्यनाथीये— जपकाले न भाषेत व्रतहोमादिकेषु च । एतेष्वेवावसक्तस्तु यद्यागच्छेत् द्विजोत्तमः ॥ अभिवाद्य ततो विप्रं योगक्षेमादि कीर्तयेत् । इति श्रीपाञ्चरात्ररक्षायां, बोधायनीये—

जपमध्ये गुरुर्वापि, वैष्णवो यस्समागतः। सम्भाषणादिपूजान्तं तस्य कृत्वानुमान्य च ॥ अनुश्राव्य ततः कुर्याज्जपशेषं समाहितः। सर्वस्य प्रभवो यस्माद्विष्णुपादाश्रया नराः ॥ तन्मूलतः क्रियास्सर्वास्सफलास्तु भवन्ति हि। इति ॥ शाण्डिल्यस्मृतौ— इज्यामध्ये तथा होमे यागे च जपकर्मणि। आगतं पञ्चकालज्ञं सम्पूज्यैवाचरेत्परम् ॥ इति।

अत्र याग इत्यनेन जपमध्येऽपि प्रणामोऽभिहितः। ततःपूर्वं प्रणामोऽनुक्तिसिद्धः। जपस्याविघ्नेन परिसमाप्त्यर्थतया मङ्गळाचाररूपश्च भागवतप्रणामः। तथा च मनुना स्मर्यते। मङ्गळाचारयुक्तानां नित्यं च प्रयतात्मनाम्। जपतां जुह्वतां चैव विनिपातो न विद्यते ॥ इति। अत्र कुल्लूकभट्टीयव्याख्या। अभिप्रेतार्थसिद्धिर्मङ्गळम्। तद्धेतुत्वेन गोरोचनादिधारणमपि मङ्गळम्। गुरुसेवादिकमाचारः। मङ्गळाचाराभ्यां युक्तानां नित्यं शुचीनां जपहोमरतानां दैवमानुषोपद्रवो न जायते इति तथोक्तम्, सच्चरित्रपरित्राणे— अत्र हि मङ्गळाचरणयोगेन जपादिषु विघ्नाभावोऽभिहितः। अत एव जाबालियाज्ञवल्क्यौ। संध्ययोरुभयोः काले ध्यात्वा विष्णुं सनातनम्। निर्मलात्मार्कसन्दर्शे गायत्रीमारभेद्बुधः ॥ इति। जपारम्भे विष्णुध्यानमाहतुः। भागवतसंदर्शने तु तत्प्रणामविष्णुध्यानयोस्समुच्चयः। तदलाभे वा, विष्णुध्यानम्। यत्तु वचनम्—एवं संध्यामुपास्याथ पितरावग्रजान् गुरून्। त्रिवर्षपूर्वान् शिष्टांश्च पार्श्वस्थानभिवादयेत् ॥ इति। तत् तत्र संध्यायासन्निहितमातापितृप्रभृतीनां स्वयमुपागम्य अभिवादनस्य उपस्थानानन्तर्यपरम्। पार्श्वस्थानिति मातापित्रादीनां पार्श्वस्थितशिष्टपरम्— त्रिवर्षपूर्वानित्येतद्वैष्णवेतरविषयम्। वैष्णवविषये तु—न परीक्ष्य वयोवन्द्या नारायणपरायणाः। किं तु श्रीविष्णुभक्ता इत्यानम्या, राजपुत्रवत् ॥ इति।

ब्राह्मस्य जन्मनः कर्ता स्वधर्मस्य च शासिता। बालोऽपि

विप्रो वृद्धस्य पिता भवति धर्मतः ॥ अध्यापयामास पितॄन् शिशु-राङ्गिरसः कविः । पुत्रका इति होवाच ज्ञानेन परिगृह्य तान् ॥ अज्ञो भवति वै बालः पिता भवति मन्त्रदः । अज्ञं हि बालमित्याहुः पितेत्येव तु मन्त्रदम् ॥ इति । भरद्वाजमनुवचनादिभिः त्रिवर्षपूर्वे-त्वस्यानपेक्षत्वविधानात् ॥

ज्यायानपि कनीयांसं सन्ध्यायां प्रणमेत् बुधः । इति ॥ सन्ध्यायां कनीयांसमपि वन्देतेत्यादिवचनात् त्रिवर्षपूर्वानित्युपयुक्त्य-नुवादे वा ॥ संग्रहे – यो दूरे वैष्णवं दृष्ट्वा प्रत्युत्थानादिनाचरेत् । संपदायुः पुण्ययशो नाशश्च नरके व्रजेत् ॥ इति ।

वैष्णवो रामानुजार्यदिव्यचरितायाम् – विष्णुचक्राङ्कितं दृष्ट्वा योऽभ्युत्थाय कृताञ्जलिः । सस्वकुलं समुद्धृत्य विष्णुलोके मही-यते ॥ चक्राङ्कितभुजं विप्रं यो भूम्यामभिवादयेत् । ललाटे पांसु-संख्यानि विष्णुलोके महीयते ॥

भविष्यत्पुराणे – चक्राङ्कितभुजं दृष्ट्वा यस्तु तं नाभिवादयेत् । तिर्यग्योनिशतं प्राप्य विष्ठायां जायते क्रिमिः ॥ भागवते – चक्रा-ङ्कितस्य सामीप्ये तपः कुर्यात्प्रयत्नतः । स्नानं दानं जपो होमस्तत्सर्वं चाक्षयं भवेत् ॥ इति ।

संग्रहे – जपमध्ये गुरुर्वापि वैष्णवो यस्समागतः । अन्योन्य-वन्दनं कुर्युश्शौरिसंबन्धवैभवात् । महत्सन्दर्शने प्राप्ते समस्तनियमै-रलम् । तालवृन्तेन किं कार्यं लब्धे मलयमारुते ॥ इति ।

वैष्णवो विषयगतायां गुरवेनाभिवाद्यम् । जपन्तन्नाभिवादये-दित्यादिकं वैष्णवेतरविषयम् । सन्ध्यापगमनकालाभिप्रायं वा । तथाहि – अवैष्णवेन ज्यायसा कनीयसो प्रणन्तव्यत्वादिति । वैष्णवं दृष्ट्वेत्यादिभिः प्रणामविषये देशकालनिरीक्षणानावश्यकत्व-

प्रतिपादनात् ॥ भरद्वाजेनापि–आचार्यवद्दैवतवन्मातृवत्पितृवत् स्वयम्। सुहृद्वत्स्वामिवत् मन्तो द्रष्टव्या राजवत्तथा ॥ इति। तेषामाचार्यवद्द्रष्टव्यत्वमभिधाय श्रुत्वैव सहसोत्थानं, प्रत्युत्थानं सुदूरतः। दर्शनानुभवप्रीतिः प्रणिपातो निवेदनम् ॥ इति। भागवतानुवर्तनप्रकारसकृत्प्रणामादिः प्रदर्शितः ॥

निर्णयसिन्धौ– ज्यायानपि कनीयांसं सन्ध्यायामभिवादयेत्। विना शिष्यं तु पुत्रं च दौहित्रं दुहितुः पतिम् ॥ इत्यादिकमपि साधारणाधिकारिविषयम् ॥

यामुनाचार्यसूनुकृष्णसूरिभिः। 'பொற்றுமரைக்கயம் நீராடப்போனிகி, நீராடப்போதுவீர் போதுமினோ' इत्यादि श्रीसूक्तिरीत्या शिष्यभूताः पुत्रभूता अपि भगवत्संबन्धे सति गौरव्या इत्यनुगृहीतम्। नच गौरव्यशब्देन प्रणामयोग्यत्वं न प्रतीतमिति वाच्यम्। तथा वचनाच्छिष्टाचाराच्च ॥

लैङ्गे– यः पश्यति शुभाचारं वैष्णवं वीतकल्मषम्। यस्मिन् कस्मिन्कुले जातं प्रणमेद्दण्डवद्भुवि ॥ इति।

वैदिकसार्वभौमाः श्रीभगवद्भाष्यकाराः स्वशिष्यभूतमहानुभावस्वामिश्रीपादतीर्थमङ्गीचक्रुरिति। श्रीवत्सचिह्नभार्या गोदाभिधाना ज्ञानाधिका स्वपुत्रभूत श्रीभट्टारकगुरुवर्य श्रीपादतीर्थमगृह्णादिति च ऐतिह्यस्य सुप्रसिद्धत्वेन ज्ञानाधिकशिष्यपुत्रादीनां प्रणामयोग्यत्वस्य कैमुतिकन्यायसिद्धत्वात्। भगवदुत्सव, भक्तोत्सवादौ तत्तदुचितकैङ्कर्यकरणानन्तरम्, सन्ध्यावन्दनाद्याज्ञाकैङ्कर्यमनुष्ठेयम्। प्रत्यवायो न विद्यते ॥ वाराहे– रथ्यागते च देवेश आस्थानं चास्थिते सति। मध्ये सन्ध्यामनुप्राप्तां दृष्ट्वा वेदान्तमोहिताः। सन्ध्योपास्तिं प्रकुर्वन्ति विप्रा विष्णुपराङ्मुखाः। श्वानयोनिशतं प्राप्य चाण्डालीं योनिमाप्नुयुः ॥ इति। तत्रैव– यस्मिन्काले विशालाक्षि यस्य यत्कर्म चोच्यते।

विप्रो शूद्रस्य पिता भवति धर्मतः ॥ अध्यापयामास पितॄन् शिशु-राङ्गिरसः कविः । पुत्रका इति होवाच ज्ञानेन परिगृह्य तान् ॥ अज्ञो भवति वै बालः पिता भवति मन्त्रदः । अज्ञं हि बालमित्याहुः पितेत्येव तु मन्त्रदम् ॥ इति । भरद्वाजमनुवचनादिभिः त्रिवर्षपूर्वं-त्वस्यानपेक्षत्वविधानात् ॥

ज्यायानपि कनीयांसं सन्ध्यायां प्रणमेत् बुधः । इति ॥ सन्ध्यायां कनीयांसमपि वन्देतेत्यादिवचनात् त्रिवर्षपूर्वानित्युपयुक्त्य-नुवादे वा ॥ संग्रहे— यो दूरे वैष्णवं दृष्ट्वा प्रत्युत्थानादिनाचरेत् । संपदायुः पुण्ययशो नाशश्च नरके व्रजेत् ॥ इति ।

वैष्णवो रामानुजार्यदिव्यचरितायाम्— विष्णुचक्राङ्कितं दृष्ट्वा योऽभ्युत्थाय कृताञ्जलिः । सस्वकुलं समुद्धृत्य विष्णुलोके मही-यते ॥ चक्राङ्कितभुजं विप्रं यो भूम्यामभिवादयेत् । ललाटे पांसु-संख्यानि विष्णुलोके महीयते ॥

भविष्यत्पुराणे— चक्राङ्कितभुजं दृष्ट्वा यस्तु तं नाभिवादयेत् । तिर्यग्योनिशतं प्राप्य विष्ठायां जायते कृमिः ॥ भागवते— चक्रा-ङ्कितस्य सामीप्ये तपः कुर्यात्प्रयत्नतः । स्नानं दानं जपो होमस्तत्सर्वं चाक्षयं भवेत् ॥ इति ।

संग्रहे— जपमध्ये गुरुर्वापि वैष्णवो यस्समागतः । अन्योन्य-वन्दनं कुर्युश्शौरिसंबन्धवैभवात् । महत्सन्दर्शने प्राप्ते समस्तनियमै-रलम् । तालवृन्तेन किं कार्यं लब्धे मलयमारुते ॥ इति ।

वैष्णवो विषयगताया गुरवेनाभिवाद्यम् । जपन्तन्नाभिवादये-दित्यादिकं वैष्णवेतरविषयम् । सन्ध्यापगमनकालाभिप्रायं वा । तथाहि— अवैष्णवेन ज्यायसा कनीयसो प्रणन्तव्यत्वादिति । वैष्णवं दृष्ट्वेत्यादिभिः प्रणामविषये देशकालनिरीक्षणानावश्यकत्व-

प्रतिपादनात् ॥ भरद्वाजेनापि–आचार्यवद्दैवतवन्मातृवत्पितृवत् स्वयम्। सुहृद्वत्स्वामिवत् भक्तो द्रष्टव्यो राजवत्तथा ॥ इति। तेषामाचार्यवद्द्रष्टव्यत्वमभिधाय श्रुत्वैव सहसोत्थानं, प्रत्युत्थानं सुदूरतः। दर्शनानुभवप्रीतिः प्रणिपातो निवेदनम् ॥ इति। भागवतानुवर्तनप्रकारसकृत्प्रणामादिः प्रदर्शितः ॥

निर्णयसिन्धौ– ज्यायानपि कनीयांसं सन्ध्यायामभिवादयेत्। विना शिष्यं तु पुत्रं च दौहित्रं दुहितुः पतिम् ॥ इत्यादिकमपि साधारणाधिकारिविषयम् ॥

यामुनाचार्यसूनुकृष्णसूरिभिः। 'பொற்றுமரைக்கயம் நீராடப்போனிகீ, நீராடப்போதுவீர் போதுமினோ' इत्यादि श्रीसूक्तिरीत्या शिष्यभूताः पुत्रभूता अपि भगवत्संबन्धे सति गौरव्या इत्यनुगृहीतम्। नच गौरव्यशब्देन प्रणामयोग्यत्वं न प्रतीतमिति वाच्यम्। तथा वचनाच्छिष्टाचाराच्च ॥

लैङ्गे– यः पश्यति शुभाचारं वैष्णवं वीतकल्मषम्। यस्मिन्कस्मिन्कुले जातं प्रणमेद्दण्डवद्भुवि ॥ इति।

वैदिकसार्वभौमाः श्रीभगवद्भाष्यकाराः स्वशिष्यभूतमहानुभावस्वामिश्रीपादतीर्थमङ्गीचक्रुरिति। श्रीवत्सचिह्नभार्या गोदाभिधाना ज्ञानाधिका स्वपुत्रभूत श्रीभट्टारकगुरुवर्य श्रीपादतीर्थमगृह्णादिति च ऐतिह्यस्य सुप्रसिद्धत्वेन ज्ञानाधिकशिष्यपुत्रादीनां प्रणामयोग्यत्वस्य कैमुतिकन्यायसिद्धत्वात्। भगवदुत्सव, भक्तोत्सवादौ तत्तदुचितकैङ्कर्यकरणानन्तरम्, सन्ध्यावन्दनाद्याज्ञाकैङ्कर्यमनुष्ठेयम्। प्रत्यवायो न विद्यते ॥ वाराहे– रथ्यांगते च देवेश आस्थानं चास्थिते सति। मध्ये सन्ध्यामनुप्राप्तां दृष्ट्वा वेदान्तमोहिताः। सन्ध्योपास्तिं प्रकुर्वन्ति विप्रा विष्णुपराङ्मुखाः। श्वानयोनिशतं प्राप्य चाण्डालीं योनिमाप्नुयुः ॥ इति। तत्रैव– यस्मिन्काले विशालाक्षि यस्य यत्कर्म चोच्यते।

तत्काले कर्म तत्यक्त्वा मामुपास्ते नरो यदि । न दोषस्तत्र देवेशि भवत्येव न संशयः ॥ इति ।

भगवच्छास्त्रे–यात्रार्थं प्रस्थिते विष्णौ मण्डपं चाप्यनाश्रिते । सन्ध्यादिकं न कुर्वीत कुर्वन्नरकमश्नुते । मत्कर्म कुर्वतां पुंसां कर्मलोपो भवेद्यदि ॥ तत्कर्म ते प्रकुर्वन्ति तिस्रः कोट्यो महर्षयः ॥ इति । वैखानसे मरीचिप्रोक्तायां आनन्दसंहितायां विखनसं प्रति भगवान्– कृतमल्लाञ्छनानां च गर्भवैष्णवजन्मनाम् । मत्कर्म करणात्तेषां कर्मलोपो भवेद्यदि ॥ तिस्रकोट्यो मुनिश्रेष्ठाः कर्म कुर्वन्तु तत्सदा । इत्यादिवचनैः भगवदुत्सवादौ पराशरे–भक्तोत्सवं तथा रात्रौ कुर्वीत सशुभाह्वयम् । अन्ते चावभृथं कृत्वा दक्षिणाभिः प्रपूजयेत् ॥ इति तथाशब्देन भगवदुत्सवधर्मातिदेशस्य कृतत्वेन भक्तोत्सवे च सन्ध्यावन्दनादिकरणनिषेधेन–महत्सन्दर्शने प्राप्ते समस्तनियमैरलम् । तालवृन्तेन किं कार्यं लब्धे मलयमारुते ॥ इत्यादिना च उत्सवाद्यन्तरितकर्मणामकर्तव्यत्वबोधनेऽपि–यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः । मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् । संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ इति गीताचार्योक्तरीत्या लोकक्षोभपरिहारार्थं अन्तरितसन्ध्यावन्दनादिरूपकैङ्कर्यस्य अकालेऽपि प्रामाणिकैः प्रपन्नैरनुष्ठीयमानत्वात् ॥

अतः प्रपन्नानां सन्ध्यादौ जपारम्भात्पूर्वं भागवतप्रणामानुष्ठानमुपपन्नम् ॥

इति श्रीसदनुष्ठानदर्पणे सन्ध्यादौ जपारम्भात्पूर्वं प्रणामविषयो नाम सप्तमप्रतिफलनम् ॥

इति प्रथमो भागः समाप्तः ॥